ह्वानसया मुनीनां इज्या यज्ञो ववृते निष्पन्ना यजेः शीङ्जेति क्यप् स्त्रियां मुनिना विश्वामित्रेण कुमारो रामः भूयः पुनरपि बभाषे ब्रवीत्यर्थात् द्विकर्मकत्वं कुमारतत्ककेलौ पचादित्वादन् कुमारो बालके स्कन्दे युवराजेऽश्ववारके इति विश्वः॥३७॥

महीय्यमाना भवतातिमात्रं सुराध्वरे घस्मरजित्वरेण। दिवोऽपि वज्रायुधभूषणाया ह्रिणीयते वीरवती न भूमिः॥३८॥

मही। भवता भूमिः पृथिवी महीय्यमाना पूज्यमाना अतिमात्रं सुष्ठु सम्यक् पालनाद्दिवोऽपि स्वर्गस्य न ह्रिणीयते न लज्जते किन्तु प्रतिस्पर्द्धत इति भावः ह्रिणी महीङिति कण्ड्वादिपाठाद्यक् ङित्वात्तङ् अवयवे कृतं लिङ्गं समुदायस्य विशेषकम्भवतीति महीयशब्दात्कर्मणि लकारः शानच् यक् अतोलोपः मुक् महीय्यमानेति रूपं सुराध्वरे सुरानुद्दिश्य योऽध्वरो यज्ञः क्रियते तत्र ये घस्मराः अदनशीलाः राक्षसाः सृघस्यदः क्मरच् तेषाञ्जित्वरेण जयशीलेन भवता इण्नशजीत्यादिना क्वरप् वज्रायुधभूषणायाः शक्र एवालङ्कारो यस्याः दिवः वीरवती त्वद्विधा वीरा यस्यां भूमाविति॥३८॥

महीय्येत्यादि। भूमिर्दिवोऽपि स्वर्गादपि न ह्रिणीयते न लज्जते तामपि स्पर्द्धत इत्यर्थः यतो भवतातिमात्रं अतिशयेन वीरवती प्रशस्तवीराङ्किता अतएव लोकैर्महीय्यमाना पूज्यमाना महीङ् वृद्धिपूजनयोः ह्रिणीङ् लज्जायां आभ्यां कण्ड्वादित्वात् नमस्तपोव

रिव इत्यादिना कः कीदृशेन भवता सुराध्वरे देवानां यज्ञे च अराणां वक्रभक्षणशीलानां राक्षसानां जित्वरेण क्षयशीलभक्षे इत्यस्मात् घसस्तद:क्मर इति क्मरः क्षरपृक्षजीनेति जेः क्षरप् क्षस्तनपितीत्यनेन तन् दिवः कीदृश्याः वज्रमायुधमस्येति वज्रायुध इन्द्रः स एव भूषणं यस्याः इन्द्रो यथा दिवः परिपालकस्तथा त्वं भूमेरितिभावः। आयुध्यतेऽनेनेति आयुधं इगुपधात् कृगृज्ञाप्रीजुङ इति कर्त्तरि विहितप्रत्ययः करणेऽपि बोध्यः। ह्वद्वोःकभावे इत्युक्तेरन्यत्रापि प्रयोगत इत्युक्तेः॥३८॥

बलिर्बबन्धे जलधिर्म्ममन्थे जह्रेऽमृतं दैत्यकुलं विजिग्ये। कल्पान्तदुःस्था वसुधा तथोहे येनैष भारोऽतिगुरुर्न्न तस्य॥३९॥

बलिर्बं संक्षेपेण स्तुतिमाह। येन भवता बलिर्बबन्धे बद्धः जलधिर्ममन्थे मथितः मन्दरं दोर्भिर्गृहीत्वा मन्थविलोडन इत्यस्य रूपम् संयोगान्तत्वात् लिटोऽकित्त्वे अनुनासिकलोपो न भवति जह्रेऽमृतम् हृतम् स्त्रीरूपधारिणा दैत्यबलम्विजिग्ये विजितमनेकधा संलिटोर्जेरिति कुलम् एरनेकाच इति यणादेशः तथा कल्पान्ते प्रलये दुःस्था दुस्थाना वसुधा पृथिवी ऊहे उद्धृता वराहरूपिणा वहेर्यजादित्वात्सम्प्रसारणम् तस्य भवत एव भारो मुनिजनरक्षणम् अतिगुरुर्न भवति सर्व्वत्र कर्म्मणि लिट्॥३९॥

बलिरित्यादि। येन भवता वामनावस्थायां बलिनामासुरो

यवन्मे वद्धः जलधिः समुद्रो ममन्थे मथितः मन्थेः स्यात्यपित् कि देति किद्भावपचे उङो लोपाभावः स्त्रीरूपेण असुरगृहीतम मृतं जह्रे हृतं दैत्यवंशो विजिग्ये विजितः जेर्गिः सन्‌लिटोः ग्भोरच्य चीति यत्वं कल्पान्ते प्रलयकाले दुःस्था जलप्लाविता वसुधा पृथिवी वराहरूपेण ऊहे उद्धृता सर्व्वत्र कर्म्मणि ठीवहेर्यजादित्वात् व्यथयहेति खेर्जिः ग्रहस्वपाद्योरिति प्रकृतेर्ज्जिः दुःखेन तिष्ठतीति दुःस्था हनजनादिति डः खसयुक्तशमिविसर्गस्य वा लोपो मनीषादित्वात् तस्य भवत एष भारो मुनिरचणरूपो नातिगुरुर्भवति ॥३९॥

इति ब्रुवाणो मधुरं हितञ्च तमाञ्जिहन्मैथिलयज्ञभूमिं। रामं मुनिः प्रीतमना मखान्ते यशांसि राज्ञां निजिघृक्षयिष्यन् ॥४०॥

इति ब्रु। इति यथोक्तप्रकारेण मधुरं श्रोत्रसुखं हितं च ब्रुवाणो अभिदधानः लक्षणहेत्वोरिति शानच् मुनिः प्रीतमनाः मखान्ते यज्ञावसाने तं राममैथिलस्य यज्ञभूमिं आञ्जिहत् गमितवान् मिथिलानां राजेति जनपदशब्दात् क्षत्रियादञित्यञ् तस्य राजन्यपत्यवदित्यतिदेशादञ् अहिगतौ इदितो नुम् प्रयोजकव्यापारे णिच् लुङ् आट् चङि णिलोपः द्विर्व्वचनेऽचीति स्थानिवद्भावादजादेर्द्वितीयस्येति हिशब्दस्य द्विर्व्वचनम् नन्द्रा इति नकारस्य प्रतिषेधः अभ्यासकार्य्यम् आञ्जिहदिति रूपम्। राज्ञां यशांसि निजिघृक्षयिष्यन् निग्रहीतुमभिभवितुमेषयिष्यन् ग्रहेः सन् स

नि ग्रहगुहोश्चेति इट्प्रतिषेधः द्विर्व्वचनादिः रुद्विदेत्यादिना सनः किञ्चम् ग्रहिज्येत्यादिना सम्प्रसारणम् ढलभष्भावौ गकारस्य घकारः कत्वषत्वे पश्चाषिच् तदन्ताद्भविष्यत्सामान्यविवक्षायां लृट् तेन भविष्यदनद्यतने लुङ् न भवति ॥४०॥

इतीत्यादि। उक्तप्रकारेण मधुरं हितं ब्रुवाणो मुनिः प्रीतमना मखस्य यज्ञस्यान्ते तं रामं मैथिलस्य जनकस्य यज्ञभूमिं आजिहत् प्रापयामास राज्ञां यशांसि निग्रहीतुं अभिभवितुं इच्छां कारयिष्यन् अर्थात् राम एव प्रयोज्यकर्त्ता मिथिलाया राजा मैथिलः विकारसंघेति ष्णः अहिङ्गतौ इदितो नुम् ञिः प्रेरणे ञिश्रीत्यङ् नाजन्तादेरिति स्यादौ नवद्रोऽये इति निषेधात् हिशब्दस्य द्वित्वं खेर्झभखयेति हस्य जः ञेर्लोपः ग्रहेः सनि नेमुगुह इतीम्निषेधः ग्रहखपेति जिः होढः झभान्तस्यादिजवामिति घः षढोःकः से इति ढस्य कः क्विलादिति षः समयङन्तोद्विः खेराद्यचो लोप्यः झभखयेति खेर्घस्य जत्वं ऋकारस्य अत्वञ्च स्यसेस्सनि ततोञिः ततः स्यतृः ॥४०॥

इतः स्म मित्रावरुणौ किमेतौ किमश्विनौ सोमरसं पिपासू। जनं समस्तं जनकाश्रमस्थं रूपेण तावैजिहतां नृसिंहौ ॥४१॥

इतः। एतौ तत्रागतौ नृसिंहौ नरौ सिंहाविव जनकाश्रमस्थं जनं रूपेण स्वरूपतया ऐजिहतामितर्कं कारितवन्तौ ऊहवितर्कं इत्यस्माद्धातोः णन्तात् कर्त्तुः क्रियाफलाविवक्षायां णिचश्चेति तङ् न भवति चङि णिलोपस्य स्थानिवद्भावात् अजादेर्द्वितीयस्ये

ति द्विर्व्वचनम्। ऊहमाह मित्रावरुणौ आदित्यवरुणौ देवता द्वन्द्वे इत्यानङ् तयोर्म्मखानुभावत्वात् सोमरसम्पिपासू पातुमिच्छू न लोकेति षष्ठीप्रतिषेधः एतावागतौ आङ्पूर्व्वस्येणो निष्ठायां रूपं किमश्विनौ अश्विनीकुमारौ सोमरसम्पिपासू एताविति एव ञ्जनम् औजिहतां सुशब्द इति पाठे एतौ सुमित्रे तिपाठः एतौ स मित्रेति सशब्दो निपातः पादपूरणार्थः॥४१॥

इत इत्यादि। तौ नृसिंहौ मनुष्यश्रेष्ठौ रामलक्ष्मणौ रूपेण सौन्दर्य्येण समस्तं जनकाश्रमस्थं जनं औजिहतां वितर्कं कारितवन्तौ ऊहङ्वितर्के ञिः प्रेरणे ञिश्रोत्यङ् नाजन्तादेरिति निषेधात् हेर्द्वित्वं घोञ्जेरिति ज्ञानार्थत्वात् कर्त्तुः कर्म्मत्वं। वितर्कमाह किमेतौ मित्रावरुणौ सूर्य्यावरुणौ सोमरसं पातुमिच्छावन्तौ इतः स अमुं देशं प्राप्तवन्तौ इणगतौ की सेनातीते इति की किम्वा एतौ अश्विनौ अश्विनीकुमारौ नासत्यदस्रौ नासत्यस्यैव दस्रस्य चैतौ तौ नामतोऽश्विनाविति मार्कण्डेयपुराणं। केचित्तु सशब्दः पादपूरणे इतोऽस्मिन् देशे एतौ आगतौ आङ्पूर्व्वादिणः क्त इत्याहुः। मित्रश्च वरुणश्चेति द्वन्द्वे सहचरितदेवताद्वन्द्वे पूर्व्वपदस्यादन्ततानिपातनात् देवीदासचक्रवर्त्ती तु एकादश इत्युदाहरता विश्वराजो ऽद्देत्यस्य योगविभागात् क्वचित् समासे पूर्व्वपदस्य दीर्घत्वं सूचितमित्याह॥४१॥

अजिग्रहत्तं जनको धनुस्तत् येनार्द्दिदद्दैत्यपुरं पिनाकी। जिज्ञासमानो बलमस्य वाह्वोर्हसन्नभांक्षी द्रघुनन्दनस्तत्॥४२॥

अजिघ्र। येन धनुषा दैत्यपुरं पिनाकी महादेव आर्द्दिदत् हिंसितवान् अर्द्दः स्वार्थिकण्यन्तात् चङि अजादेर्द्वितीयस्येति दि शब्दो द्विरुच्यते रेफस्य प्रतिषेधः तद्धनुः तं रामञ्जनकः अजिघ्र हत् बोधितवान् अनेन धनुषा त्रिपुरन्दग्धमिति घ्रहेर्हेतुमण्णन्ता चङि णिलोपः णौ चङि ह्रस्वः सन्वल्लघुनीत्यादि लघूपधगुणस्य बुद्ध्यर्थत्वात् गतिबुद्धीत्यादिना रामस्य कर्म्मसंज्ञा। अस्य रामस्य बाह्वोर्भुजयो र्बलञ्जिज्ञासमानो जनकः एवम्भूतन्धनुः हसन् स्मयमानो रघुन न्दनो रामः अभाङ्क्षीत् भग्नवान् भञ्जेर्लुङि सिचि हलन्तलक्षणा वृद्धिः तत्र हि हल्ग्रहणं समुदायप्रतिपत्त्यर्थमित्युक्तम्॥ ४२॥

अजिघ्रहदित्यादि। जनको राजा तं रामं तद्धनुरजिघ्रहत् ग्राहयामास धातूनामनेकार्थत्वात् ग्रहिरत्र ज्ञानार्थ इत्यन्ये घोर्ज्ञेरिति प्रयोज्यकर्त्तुः कर्मत्वं ण्यन्तानांङःस्व इति ह्रस्वः खेः सन्व दिति सन्वत् येन धनुषा पिनाकी शिवो दैत्यानां पुरं त्रिपुरं आर्द्दिदत् हतवान् अर्द्दकवधे स्यादौ नवद्रोऽर्थे इति निषेधात् द्वे द्वित्वं केचित्तु धनुषा प्रयोज्यकर्त्रा घातयामास इत्यर्थमाहुः जनकः कीदृशः अस्य रामस्य बाह्वोर्बलं जिज्ञासमानः ज्ञातुमि च्छन् स्मृदृशमनुज्ञेति सनन्तज्ञो मं हसन् लीलयैव तद्धनुरभा ङ्क्षीत् भञ्जोधौ मोटने स्यांचिः अनिमत्वात् व्रजवदेति त्रिः चङि ति कुङ्॥ ४२॥

ततो नदीष्णान् पथिकान् गिरिज्ञानाह्वायकान् भूमिपतेरयोध्या। द्विषः सुतां योधवरैस्तुरङ्गैर्व्यस र्ज्जयन्मैथिलमर्त्यमुख्यः॥ ४३॥

तत इति। धनुर्भङ्गादनन्तरमद्यानयमिति ज्ञात्वा जनकः सुतान्दुहितरन्दित्सुः दातुमिच्छुः ददातेः सनिमीमेत्यादिना अच इस् द्विर्व्वचनम् अत्रलोप इत्यभ्यासलोपः सश्चेति तत्वम् सनाशंसभिच उः भूमिपतेर्दशरथस्य आह्वायकान् आह्वयन्ति आकारयन्तीति कर्त्तरि ण्वुल् आतो युक् कृत्प्रयोगे भूमिपतौ कर्म्मणि षष्ठी तान् अयोध्यां व्यसर्जयत् विसर्ज्जितवान् विपूर्व्वस्य सृजेर्हेतुमण्ण्यन्तस्य लङि रूपं गत्यर्थत्वात् द्विकर्म्मकता। नद्यां स्नान्तीति नदीष्णाः सुपिस्थ इति योगविभागात्कः आतोलोपः निनदीभ्यांस्नातेरिति षत्वम् नदीन्तरीतुंकुशलान् इत्यर्थः। पथिकान् पथि कुशलान् तत्रकुशलःपथ इति ठक् गिरिज्ञान् यथाप्रदेशङ्गिरिज्ञान् इगुपधेत्यादिना कः तुरङ्गैः अश्वैः करणभूतैः युध्यन्त इति योधाः पचाद्यच् तानाहर्त्तुं चमैः वयसि चेत्यच्। हसिमृग्रिण्वामिदमि लूपूधूर्व्विभ्यस्तन्नित्यौणादिकस्तन्। म्रियन्ते प्राणिनोऽस्मिन्निति मर्त्यो भूर्लोकः तत्र भवा मर्त्या मनुष्या दिगादेराकृतिगणत्वात् यत् आकृतिगणत्वस्य लिङ्गं देवमनुष्यपुरुषपुरुमर्त्येभ्य इति निर्द्देशः मुखमेव मुख्यः प्रधानम् शाखादिभ्यो यः। मर्त्यानाम्मुख्यो मर्त्यमुख्यः मैथिलश्चासौ मर्त्यमुख्यश्चेति विशेषणसमासः जनक इत्यर्थः॥ ४२॥

तत इत्यादि। धनुर्भङ्गानन्तरं मिथिलासम्बन्धिमनुष्यश्रेष्ठो जनकः रामाय सुतां दित्सुर्दातुमिच्छुः सन् भूमिपतेर्दशरथस्य आह्वायकान् दूतान् तुरङ्गैरयोध्यां व्यसर्ज्जयत् प्रेरयामास तुरङ्गैः कीदृशैः योधहरैः योधान् हर्तुं चमैः हृञःपचादित्वादच् वयोबोधकवहनार्थेऽनिति क्रमदीश्वरादयः एतेन शीघ्रगमनं दर्शितं

शर्द्धंजहेत्यादिना तुरङ्गो निपातितः किम्भूतान् नदीष्णान् नदीस न्तरणकुशलान् नदीस्नातिनिस्नात्योर्दाच्ये इतिरामानन्दसूत्रेण मनीषादित्वात् वा षत्वं नदीष्णो नदीश इति पुरुषोत्तमः। प न्थानं गच्छति वेत्ति वा इति निपातनादकः ष्णाम्नात् स्वार्थे को वा पथि कुशलः पथक इति केचित् गिरिं जानन्तीति गिरिज्ञा हनजनादिति डः ॥४३॥

क्षिप्रं ततोऽध्वन्यतुरङ्गयायी यविष्ठवद्वृद्धतमोऽपि राजा। आख्यायकेभ्यः श्रुतसूनुवृत्तिरम्लानयानो मिथिलामगच्छत् ॥४४॥

क्षिप्रम्। आख्यान्ति कथयन्ति ये ते आख्यायकास्तेभ्यः श्रुता सूनुवृत्तिर्येन स राजा दशरथः सूयत इति सूनुः पुत्रः द्वाभ्या नुरिति वर्त्तमाने सुवःकिचेत्यौणादिको नुप्रत्ययः। ततोऽनन्त रमेव क्षिप्रं शीघ्रं स्फायितञ्चीत्यादिना रक् क्रियाविशेषणञ्चैतत् मिथिलामगच्छत् भरतश्रुघ्नाभ्यां सहेत्यर्थादनुपकव्यं गमेर्ल ङि इषुगमियमाञ्छः अध्वानम् अलङ्गामिनो ये तुरङ्गा अश्वाः ते अध्वन्याः अलङ्गामीत्यस्मिन्नर्थे अध्वनोयत्खाविति यत् येचा भावकर्म्मणोरिति प्रकृतिभावः तैः साधु यातीति साधुकारिणि णिनिः अध्वन्यतुरङ्गयायी एवञ्च कृत्वा अम्लानयानः न विद्यते म्लानं म्लानिर्यस्मिन्याने तत् अम्लानं अम्लानं यानं यस्य ताह शस्तुरङ्गैः सुखयानः म्लानेति भावे निष्ठा संयोगादेरात इति

नत्वम्। वृद्धतमोऽपि यविष्ठवत् युवतम इव युवशब्दस्येष्ठनि स्थूलदूरेत्यादिना यणादिपरलोपः पूर्व्वस्य च गुणः पश्चात्तेन तुल्यम् इति वतिः॥४४॥

क्षिप्रमित्यादि। ततोऽनन्तरं आख्यायकेभ्यः श्रुता सूनोः पुत्रस्य वृत्तिर्व्यवहारो येन स राजा दशरथः मिथिलां जनकपुरीं शीघ्र मगच्छत् कीदृशः अध्वन्यैस्तुरङ्गैर्यातीति ग्रहादित्वाणिन् शीलार्थे णिनित्येके आवश्यके णिन् इति केचित् अध्वानमत्यर्थं गच्छतीति यः अनित्वविवक्षया न ञिः मन्वर्ज्ञानवर्म्मेति नलोपाभावः अध्वनि कुशलोऽध्वन्यो वा वृद्धतम इति अयमेषामतिशयेन वृद्धोऽपि यविष्ठवत् प्रकृष्टयुववत् गुणादेष्ठेयस्य इतीष्ठः वाढान्तिकेति यूनो यवादेशः औमंश्चडित्वैकाच इति डित्वात् टेर्लोपः। अम्लान मक्लिष्टं यानं यस्य ग्लैकान्तिसंक्षये क्तः यलयुक्तादन्तत्वात् स्वत्वादोरिति क्तस्य नत्वं॥४४॥

वृन्दिष्ठमार्च्चीद्वसुधाधिपानां तं प्रेष्ठमेतं गुरुवद्गरिष्ठं। सदृक्षशात्नं सुकृताधिवासं वंहिष्ठकीर्त्तिर्यशसा वरिष्ठं॥४५॥

वृन्दिष्ठम्। तं राजानमेतमायातञ्जनक आर्च्चीत् पूजितवान् अर्च्चेर्लुङि रूपम् वृन्दिष्ठं वृन्दारकतममशस्ततममित्यर्थः केषामसुधाधिपानाम्पृथ्वीपतीनाम् प्रेष्ठम्प्रियतमम् गुरुवत् गुरुणा तुल्यम्वर्त्तमानङ्गरिष्ठम् गुरुतमम् सदृक् समानान्ययोश्चेत्युपसंख्यानाद्दृशेः क्विप् रूढिशब्दश्चायम् नात्र दर्शनक्रिया विद्यते।

अभिजनादिभिस्तुल्यो जनक इत्यर्थः महान्तम् महानुभावसह्य आम्मध्य महान्तं सुकृताधिवासं सुकृतनिलयम् अधिवसत्यस्मिन्निति अधिकरणे घञ् वंहिष्ठा बहुलतमा कीर्त्तिर्यस्य स वंहिष्ठकीर्त्तिः यशसा वरिष्ठमुरुतमम् अत्र वृन्दारकप्रियगुरुवहुलो रूणामिष्ठनि यथासङ्ख्यमिति रित्यादिना वृन्दप्रगरवंहवर इत्येते आदेशा भवन्ति ॥ ४५ ॥

वृन्दिष्ठमित्यादि। अर्थात् जनकस्समागतं दशरथं आर्चीत् पूजितवान् किम्भूतं वसुधाधिपानां राज्ञां मध्ये वृन्दिष्ठं प्रशस्ततमं प्रेष्ठं प्रियतमं गुरुवत् उपदेष्टृवत् पितृवद्वा गरिष्ठं गुरुतमं महान्तं महाशयं सुकृतानि पुण्यानि अधिवसन्त्यस्मिन्निति आधारे घञ् यशसा वरिष्ठं उरुतमं वृहत्तममित्यर्थः। जनकः कीदृशः सदृक् अर्थात् दशरथस्य समान इव दृश्यते योऽसाविति तदादिभवत् समानेति क्विप् समानेदमिति सादेशः सदृशानां महान्तमित्यर्थे वंहिष्ठा बहुतमा कीर्त्तिर्यस्य स तथा वृन्दिष्ठादौ गुणादेष्ठेयसू इतीष्ठः वाढान्तिकेत्यादिना वृन्दारकप्रियगुरुवहुलोरूणां वृन्दप्रगरवंहवरादेशः ओमंसेति डित्वात् टेर्लोपः प्रेष्ठमित्यत्र एकाचलान्न डित्वं॥ ४५ ॥

त्रिवर्गपारीणमसौ भवन्तमध्यासयन्नासनमेकमिन्द्रः। विवेकदृश्वत्वमगात्सुराणां तं मैथिलो वाक्यमिदं बभाषे ॥ ४६॥

त्रिवर्ग। तन्दशरथं मैथिलो जनकः वाक्यमिदम्बभाषे अवोचदित्यर्थः

ग्रहणात् द्विकर्म्मकता किन्तद्वाक्यमित्याह असाविन्द्रो भवन्तम् एकासनमध्यासयन् आरोपयन् विवेकदृश्वत्वमगादिति सम्बन्धः आसनस्याधिशीङित्यादिना अधिकरणे कर्म्मसंज्ञा भवन्तमिति गतिबुद्धीत्यादिना आस्तेरण्यन्तावस्थायामकर्म्मकत्वात्। पार ङ्गामीत्यस्मिन्वाक्ये अवारपारेत्यादिना पारशब्दात् खः तत्र विगृहीतविपर्य्यस्तग्रहणात् त्रिवर्गस्य धर्म्मार्थकामस्य पारीण मिति षष्ठीसमासः त्रिवर्गपारीणभवन्तं सुराणामध्ये स एवै का विवेकदृश्वत्वं विवेकज्ञतामगात् इणोगा लुङि गातिस्थेत्या दिना सिचो लुक् विवेकन्दृष्टवानिति दृशेः क्वनिप्॥ ४६॥

त्रिवर्गेत्यादि। मैथिलो जनकः तं दशरथं इदं वाक्यं बभाषे ब्रुवीत्यर्थत्वात् द्विकर्म्मकता किन्तदित्याह भवन्तमेकमासनमध्या सयन्नुपवेशयन् इन्द्रः सुराणां विवेकदृश्वत्वं सदसद्भेदज्ञत्वं अ गात् प्राप्तवान् कीदृशं त्रिवर्गस्य पारं गच्छतीति ढघेकादिति णीनः त्रिवर्गो धर्म्मकामार्थैरित्यमरः। असाविति बुद्धिस्थनि दर्शनं विवेकं दृष्टवानिति चासुमिति क्वनिप् भवन्तमिति अध्यासेः प्रागविवक्षितकर्म्मत्वादकर्म्मकत्वेन प्रयोज्यकर्त्तुः कर्म्मत्वं आसन मिति कर्म्मक्रियेत्यादिना आधारस्य कर्म्मत्वं॥ ४६॥

हिरण्मयी शाललतेव जङ्गमा च्युता दिवः स्थास्नुरि वाचिरप्रभा। शशाङ्ककान्तेरधिदेवताकृतिः सुता ददे तस्य सुताय मैथिली॥ ४७॥

हिर॥ तस्य दशरथस्य सुताय रामाय सूयत इति सुतः

सुप्रसवश्वर्य्ययोरित्यस्मात् कर्म्मणि निष्ठा सुता मैथिली सीता द दे जनकेनेत्यर्थात् कर्म्मणि लिट् मैथिलस्यापत्यं अणन्तत्   तद न्तादितो मनुष्यजातेरिति ङीष्। रामस्य ज्येष्ठत्वात्तस्यैव कवि ना परिणय उक्तः न शेषाणाम् तेन अन्या अपि तदैव दुहित रो दत्ताः हिरण्मयी सुवर्णनिर्मितेव सालतता वृक्षलता सुवर्ण छवित्वात् तस्याः हिरण्यविकार इति मयटि दाण्डिनायनेत्या दिना यलोपनिपातनम्। जङ्गमा सञ्चारिणी नतु स्थावरा अ त्यर्थङ्गच्छतीति यङि नुगत इति नुक् यङन्तात्पचाद्यचि यङो ऽचिचेति यङो लुक् च्युता दिवः आकाशात्पतिता अचिरप्रभेव विद्युदिव तेजस्वित्वात् तच्छीलाच किन्तु स्थास्नुरचञ्चला सा तु च ञ्चलेति व्यतिरेकः ऊङुत इति ऊङ् न भवति क्रियाशब्दत्वात् तत्र मनुष्यजातेरिति वर्त्तते शशाङ्ककान्तेर्य्याधिदेवता अधि ष्ठात्री देवता तस्या आकृतिर्य्यस्याः सौम्यत्वात् आक्रियते अनये त्याकृतिः संस्थानम् अकर्त्तरिकारकेति स्त्रियां क्तिन्॥ ४७॥

हिरण्मयीत्यादि। अर्थात् जनकेन तस्य दशरथस्य सुताय मैथि ली सुता ददे मैथिलस्यापत्यं स्त्रीति ष्णः यद्वा मिथिलायां नगर्य्यां अर्थात् मिथिलास्थभूभागे जाता अयोनिसम्भवत्वात् पार्थिवीत्य र्थः अयोनिसम्भवत्वेन दिव्यत्वाल्लक्ष्मीत्वं सूचितं रामसमीपे सीता कीदृशी हिरण्मयी स्वर्णमयी सालवृक्षसम्बन्धिनी लतेव एतेन रा मस्य सालवृक्षतुल्यत्वं सूचितं मयटि हिरण्यस्य यलोपो निपात नात् जङ्गमा सञ्चारिणी अन्या लता स्थिरेति विशेषः यद्यपि गत्यर्थाद्दक्रतायां यङ्स्यात्तथापि जङ्गमशब्दोऽयं रूढः दिव श्च्युता अचिरप्रभा विद्युदिव स्थास्नुः स्थितिशीला विद्युच्चञ्चला

इति विशेषः ग्लाघ्याखेति खुः अतिसौम्यत्वात् चन्द्रकान्तेरधिदेव ताया अधिष्ठातृदेवताया इवाकृतिर्यस्याः॥४७॥

लब्धां ततो विश्वजनीनवृत्तिस्तामात्मनीनामुदवो ढ रामः। सद्रत्नमुक्ताफलभर्म्मभूषां संवंहयन्तीं रघु वंशलक्ष्मीं॥ ४८॥

लब्धाम्। ततो दानानन्तरम् लब्धान्तामात्मनीनाम् आत्मनेहि तां आत्मविश्वेति खः रामः उदवोढ वहेः स्वरितेत्त्वात्कर्त्तुः क्रिया फलविवक्षया तङ् विश्वजनीना विश्वजनाय हिता वृत्तिः प्रवृत्ति र्यस्य रामस्य स पूर्व्ववत्खः सती उत्कृष्टा रत्नादिशोभा यस्याः तैरलङ्कृतत्वात् तां सद्रत्नमुक्ताफलभर्म्मशोभाभर्म्म स्वर्णं सर्व्व धातुभ्योमनिन् भर्म्मभूषामिति पाठान्तरम् सद्रत्नादिभूषा अल ङ्कारो यस्या इति योज्यम् गुरोश्चहल इत्यकारः संवंहयन्तीं सम्यक्बहुलामतिस्थिराङ्कुर्व्वाणाम् बहुलशब्दात्तत्करोतीति णिचि इष्ठवद्भावात् प्रियस्थिरेत्यादिना वंहादेशः पश्चात्तदन्तस्य सम्य र्व्वस्य साधनेन योगः कामित्याह रघुवंश्यलक्ष्मीमिति रघुवंशे भवाम्बिभूतिम्वर्गान्ताच्चेत्यणवृत्तौ अशब्दे यत्खावन्यत रस्यामिति यत्॥४८॥

लब्धामित्यादि। ततोऽनन्तरं आत्मने हितां लब्धां तां सीतां राम उदवोढ उत्पूर्व्ववहः परिणये सहवहोऽदोढीति अत ओत्वं इन्धवलोत् भत्वाभावः विश्वेषां जनानां हिता वृत्तिर्व्यव

हारो यस्य विकारः सैवेत्यादिना हितार्थे ईनः सर्व्वर्मेत्यादिना आत्मनो नलोपाभावः। मङ्गलानि मुक्ताफलानि भर्म्माणि भूषा अलङ्कारो यस्याः शोभामिति पाठे तैः शोभते पचादित्वादच् सती वर्त्तमाना रत्नादीनां शोभा यस्येति वा। हेम स्वर्णं जातरूपं सुवर्णं भर्म्म हाटकं शातकुम्भमिति हलायुधः रघुवंशलक्ष्मीं संवंहयन्तीं सम्यक् वङ्गलीकुर्व्वतीं लेःहत्याख्यानेञिः वाढान्ति केति वंशादेशः॥४८॥

सुप्रातमासादितसम्मदं तद्वन्दारुभिः संस्तुतमभ्ययोध्यं। अश्वीयराजन्यकहास्तिकाढ्यमगात्सराजं बलमध्वनीनं॥ ४९ ॥

सुप्रातेति। विवाहं निर्व्वर्त्य प्रभाते अयोध्याभिमुखन्तद्बलन्दशरथस्यागात् गतवत्। सुप्रातन्निरुपद्रवत्वात् शोभनम्प्रातर्द्दिनमुखं यस्य बलस्य। सुप्रातसुश्वेत्यादिना समासान्तष्टिलोपश्च निपात्यते। आसादितसम्मदमाप्तहर्षं प्रमदसम्मदौ हर्षे इति निपातनम्। वन्दारुभिः संस्तुतं कृतस्तवम् अभ्ययोध्यम् अयोध्याभिमुखम् अभिप्रती आभिमुख्ये इति अव्ययीभावः। अश्वानां समूहो अश्वीयं केशाश्वाभ्यां यञ्छाविति छः राजन्यानां क्षत्रियाणां समूहो राजन्यकम्। गोत्रोक्षेत्यादिना वुञ् प्रकृत्याकेराजन्यमनुष्ययुवान इति प्रकृतिभावादपत्ययकारलोपो न भवति। हस्तिनां समूहो हास्तिकम् अचित्तहस्तीति ठक्। एषां सेनाङ्गत्वात् द्वन्द्वैकवद्भावः तेनाढ्यमुपचितमिति तृतीयेति योगविभागात्समासः। सह राज्ञेति विगृह्य [illegible]

भावः। अव्ययीभावे चाकाले इति सभावः अनश्चेति टच् समासान्तः। अध्वनीनमध्वानमलङ्गामीत्यध्वनीयत्खौ आत्माध्वानौ खे इति प्रकृतिभावः॥४८॥

सुप्रातमित्यादि। तद्दलं दशरथसैन्यं अभयोध्यं अयोध्याम भिमुखीकृत्य अगात् इणोगाथां शोभनं प्रातर्यस्य तत् सुप्रातं निश्चिन्तत्वात् निपातनेन स्वार्थे घ्येन वा साध्यं। आसादितः प्राप्तः प्रमदो हर्षो येन वन्दारुभिः स्तुतिपाठकैः संस्तुतं वदिङ्नुत्यभिवादयोः इवन्द आरुः अश्वराजन्यहस्तिनां समूहेन आढ्यं प्रभूतं विकारसंघेत्यादिना समूहार्थे अश्वादीयः राजन्यहस्तिभ्यां कण् राज्ञा सह विद्यमानं सराजं राजसहितं अनवच्छिन्नं युगपद्दा इत्यर्थः। वःकसामीप्येति साकल्ये यौगपद्ये वा अव्ययीभावः अनद्व्यनेनाप्रत्ययः। सह: सोऽकाले इति सः अध्वानमनुगच्छति ठघेकादिति ईनः मन्नर्णानित्यादिना नलोपाभावः॥४९॥

विशङ्कटो वक्षसि बाणपाणिः सम्पन्नतालद्वयसः पुरस्तात्। भीमो धनुष्मानुपजाम्बरश्रिरैति स्म रामं पथि जामदग्न्यः॥५०॥

विशेति॥ एवमस्य गच्छतः पथि मार्गे सप्तम्यां भस्य टेर्लोपः पुरस्तादग्रतः अस्तातीयेति पूर्व्वस्य पुरादेशः। रामो जामदग्न्यः जमदग्नेरपत्यं रामोऽयम् गर्गादिपाठाद्यञ् स ऐति स्म आयतवान् आङ्पूर्वादिणो लट् एत्येधत्यूट्स्विति वृद्धिः। विशङ्कटो वक्षसि विशालः उरसि वेः शालच्छंकटचाविति शङ्कटच्।

वाणः पाणावस्येति वाणपाणिः प्रहरणार्थेभ्य इत्यादिना सप्तम्यन्तस्य परनिपातः। सम्यक्षोभितस्योयस्तालवृक्षः स प्रमाणं यस्य स तथोक्तः प्रमाणे द्वयसच्। भीयते ऽस्मादिति भीष्मः भियः षुक्वेति ओणादिको मक्प्रत्ययः वा षुगागमश्च। भीमादयो ऽपादान इत्यपादाने साधुः। धनुष्मान् धनुषा युक्तः संसर्गे मतुप्। जान्वोः समीपमुपजानु सामीप्येऽव्ययीभावः उपजानु अरत्निर्यस्य स तथोक्तः प्रलम्बबाहुरित्यर्थः॥ ५०॥

विशङ्कटइत्यादि। अथ जामदग्न्यः परशुरामः पुरस्तात् पूर्व्वस्यां दिशि अग्रतो वा पथि रामं ऐति स्म आगतः जमदग्नेरपत्यमिति गर्गादित्वात् यञः पुरस्तादिति दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिरिति स्तात् पूर्व्वाधरावरा इति पुरादेशः। वक्षसि विशङ्कटो विशालः वाणः पाणौ यस्य वाणयुतः पाणिर्यस्येति वा। सम्यक्षोभितो विशालोयस्तालवृक्षः स परिमाणं यस्य दघ्नमात्रद्वयसज्मात्रे इति द्वयसः विभेत्यस्मात् भीष्मो निपातनात्। धनुष्मान् प्रशंस्तधनुर्युक्तः मतुरस्त्यर्थे जान्वोः समीपमुपजानु तत्रारत्निर्यस्य दीर्घबाहुत्वात् अरत्निस्तु निष्कनिष्ठेन मुष्टिना इत्यमरः। रत्न्यरत्नी स्त्रियौ हस्तौ बद्धमुष्टिततालुली इत्यमरमाला॥ ५०॥

उच्चैरसौ राघवमाक्रतेदं धनुः सवाणं कुरु माति यासीः। पराक्रमज्ञः प्रियसन्ततिस्तं नमः क्षितीन्द्रो ऽनुनिनीषुरूचे॥ ५१॥

उच्चैः॥ उच्चैर्महता ध्वनिना राघवन्दाशरथिं एवम्मत्युमा ह्वमाकृत आह्वतवान् स्पर्द्धायामाङ इत्यात्मनेपदम् आत्मने पदेष्वन्यतरस्यामिति च्लेरङ्। धनुः सबाणङ्कुरु धनुषि बाणमा रोप्य युद्धाय सज्जीभवेत्यर्थः मातिपासीः मातिक्रम्य गमनङ्का र्षीः यातेर्माङि लुङ् अडभावः यमरमनमातांसक्चेति इट् इट ईटीति सिचोलोपः। अथ क्षितीन्द्रोदशरथः तमूचे ब्रुवोवचिः आदेशस्य स्थानिवद्भावेन कर्त्तुः क्रियाफलविवक्षायान्तङ् न वचेः परस्मैपदित्वात् वच्यादिना सम्प्रसारणम्। पराक्रमज्ञः यत स्तस्य पराक्रमञ्जानाति राजा प्रियसन्ततिः प्रिया सन्ततिर्यस्य रामे व्यापादिते माभूत्सन्तानविच्छेद इति नम्रः प्रणतोभूत्वा अनु निनीषुः अनुनेतुमिच्छुः तदनुनयमाह॥५१॥

उच्चैरित्यादि। असौ परशुरामः उच्चैर्महाशब्देन राघवं राममाकृत स्पर्द्धयामास आह्वानं कृतवान् स्पर्द्धायामाङ इति क्रेको मं वक्ष्यस्यख्यातिपेति ङः। इदं मदीयं धनुः सबाणं कुरु अनै व बलं ज्ञात्वा युद्धं करिष्यामि एतावतैवापराजितोऽहमितिभा वः। अन्ये तु इदं त्वदीयं धनुः सबाणं कुरु धनुषि बाणमारोप्य यु द्धाय सज्जीभवेत्यर्थ इत्याऊः इदमिति इस्तनिर्द्दिष्टत्वादुक्तं माति यासीः मातिक्रम्य गच्छ मेत्यव्ययं निषेधे तद्योगेऽम्निषेधः यमर मनमेति इमसनौ। अथ क्षितीन्द्रोदशरथस्तं जामदग्न्यमूचे वचो ऽरे इतिब्रुञो वचादेशः स्थानिवद्भावात् कर्त्तुः क्रियाफलवत्त्वविव क्षायां मं व्यथयस्वेति खेर्ङ्मिः यत्स्वपाद्योरिति प्रकृतेर्ङ्मिः स किम्भू तः पराक्रमज्ञः परशुरामस्य पराक्रमं जानाति प्रिया सन्ततिः सन्तानो यस्य प्रियसन्तानः अतएव नम्रः प्रणतः सन् अनुनिनीषुः अनुनेतुमिच्छुः॥५१॥

अनेकशो निर्जितराजकस्त्वं पितॄनतार्प्सीर्नृपरक्ततोयैः। संक्षिप्य संरम्भमसद्विपक्षं कास्थार्भकेऽस्मिंस्तव राम रामे ॥५२॥

अनेति। संरम्भं क्रोधं संक्षिप्य उपसंहर क्षिपेः लोटि मध्यमैकवचने रूपम् अन् एकमेकमिति विगृह्य सङ्ख्यैकवचनाच्चेति शस् पश्चान्नञ्समासः। अनेकशोऽनेकप्रकारमिति क्रियाविशेषणमेतत् निर्जितम्पराजितं राजकं राज्ञां समूहो येन स निर्जितराजकः गोत्रोक्षेत्यादिना वुञ्। त्वं पुनः पितॄनतार्प्सीः प्रीणितवानसि कैः नृपरक्ततोयैः तृपप्रीणने इत्यस्माल्लुङ् सिच् हलन्तलक्षणा वृद्धिः। असद्विपक्षम् असन्नविद्यमानो विपक्षो यस्मिन् संरम्भे निर्जितराजकत्वात् रामो विपक्ष इति चेदाह कास्थार्भकेऽस्मिंस्तव राम रामे हे परशुराम अर्भके बालके रामे तव का आस्था क आदरोऽस्ति नैवेत्यभिप्रायः ॥५२॥

अनेकश इत्यादि। हे राम हे परशुराम संरम्भं क्रोधं संक्षिप्य संहर क्षिपोऽनुदि अनेकवारं निर्जितं राजकं येन तथाभूतस्त्वं अतः क्रोधो न युक्तः नृपाणां रक्तानि रुधिराण्येव तोयानि तैस्त्वं पितॄन् अतार्प्सीः प्रीणितवान् एकविंशतिवारान् निःक्षत्रीकृत्य तद्रक्तैः पितृतर्पणकरणं तस्य प्रसिद्धं त्रिस्तृपप्रीणने रूपमृपस्पृशेति विकल्पात् सिः वेसूदितिरधादित्वादिकल्पेनभावपक्षे अअवदेति त्रिः। संरम्भं कीदृशं असन्नवर्त्तमानो विपक्षो यत्र तादृशं निर्जितराजकत्वात् रामो विपक्ष इति चेदाह अस्मिन् मत्पुत्रे रामे अर्भके

बालके तव का आस्था आदरो यत्नो वा न कापीतिभावः। आस्थाचालम्बनास्थानयत्नापेचासु कथ्यते इति विश्वः। रामपदद्वये नणामसाम्यादपि क्रोधो नोचित इति व्यज्यते। अनेकश्च एकमेकं इति विगृह्य संख्यैकार्थादीप्सायामिति चशस् पश्चान्नञ्सः अनेकस्यापि संख्यावाचित्वात् तत एव चशस् इत्येके राजकमिति विकार संघेति राज्ञः समूहार्थे कण् ॥ ५२॥

अजीगणद्दाशरथं न वाक्यं यदा स दर्पेण तदा कुमारः। धनुर्व्यकार्षीद्गुरुवाणगर्भं लोकानलावीद्विजितांश्च तस्य ॥५३॥

अजीग। दाशरथन्दशरथस्येदन्दाशरथम्तस्येदमित्यण् वाक्यम्वचनं यदा स्वदर्पेण स्वमदेन हेतुना जामदग्न्यः नाजीगणत् न गणितवान् गणसङ्ख्यान इत्यस्यादन्तत्वान्न वृद्धिः चङि चेति द्विर्वचनम् ईचगणइति अभ्यासस्येकारः तदा कुमारो रामोधनुर्व्यकार्षीत् आकृष्टवान् कृष आकर्षणे स्पृशमृशेत्यादिनो पसङ्ख्यानेन सिचि पचे रूपम् हलन्तलक्षणावृद्धिः षढोःकस्सीति कत्वम् कृतदारकर्मापि पुत्रः पितरि जीवति कुमार इति व्यपदिश्यते। गर्भयतीति गर्भः गुरुर्वाणोगर्भोयस्य धनुषः लोकांश्च स्वप्रभावाद्विजितान् तस्य परशुरामस्य अलावीत् छिन्नवान् लुनातेर्लुङि सिचि वृद्धौ रूपम्। समुच्छिद्यन्तामस्य लोका इति अमोघमस्त्रंमुक्तवानित्यर्थः ततःप्रभृति तस्य सर्व्वं तेजोऽपहृतम् ॥५३॥

अजीगणदित्यादि। यदा स जामदग्न्यः दाशरथं वाक्यं दर्पेण

दर्पात् न अजीगणत् न गणितवान् दशरथस्येदमिति विकार संघेत्यादिना ण्यः। गणत्कसंख्याने वेङ्गणकथः णिञ्जर्थकेति खे रीङ् तदा कुमारो युवराजो बालको रामो धनुर्व्यकार्षीत् भा ष्टवान् कृपोत्वाह्रवि क्षपमृषेति षिः अजवदेति भिः षढोः कःसे इति कः किलादिति षः। कीदृशं धनुर्गुरु महत् बाणो गर्भ इव मध्यव र्त्ती यत्र बाणो गर्भे यस्येति वा गुर्व्विति बाणविशेषणम्वा। ततस्तस्य जामदग्न्यस्य विजितान् वशीकृतान् लोकान् स्वर्गानलावीत् छिन्न वान् तत्र गमनं निषिद्धवानित्यर्थः लुर्ञ्गक्छिदि टी॥५३॥

जिते नृपारौ सुमनीभवन्ति शब्दायमानान्यशनैर शङ्कं। वृद्धस्य राज्ञोऽनुमते बलानि जगाहिरेऽनेकमु खानि मार्गान्॥५४॥

जितेइति। जिते नृपारौ परशुरामे बलानि सैन्यानि मार्गान् पथः जगाहिरे अवष्टभवन्ति। वृद्धस्य राज्ञोदशरथस्यानुमते सति गच्छतेति। जामदग्न्यसंरम्भादसुमनांसि सुमनांसि सन्ति सुमनीभवन्ति बलानि अरुर्मनइत्यादिना च्यावन्त्यस्य लोपे अस्य च्याविति ईत्वे रूपम्। शब्दायमानानि अशनैः सुष्ठु शब्दं कुर्वा णानि एवञ्चितस्तथा जितो नृपारिरिति शब्दवैरेत्यादिना क्यङ् अशङ्कन्निर्भयञ्जगाहिर इति क्रियाविशेषणम्। अनेकमुखानि पृ थग्भूतानि पूर्व्वभयेन वक्षलीभूतत्वादनीकानामङ्गत्वादङ्गवचन मिति॥५४॥

जित इत्यादि। नृपाणां अरौ परशुरामे रामेण जिते सति वृद्ध

स राज्ञो दशरथस्यानुमते अनुमतौ सत्यां बलानि सैन्यानि अयद्धं अथा यानयथा मार्गान् पथोऽगाहिरे आक्रान्तवन्ति गाहूङ् विलोडे। कीदृशानि पूर्व्वं जामदग्न्यभयात् असुमनांसि सुमनांसि भवन्ति च्विःअभ्रस्तद्भूततद्भावे इति च्विः। मनश्चक्षुरिति सलोपे अकारस्य ईः अशनैरुच्चैः शब्दायमानानि जयशब्दं कुर्व्वाणानि शब्दसुखकष्टादेरिति क्यः अजस्वरे इति दीर्घः। अनेकमुखानि पूर्व्वं भयात् वर्त्तुलीभूय सम्प्रति पृथग्भूतानि॥५४॥

अथ पुरुजवयोगान्नेदयद्दूरसंस्थं दवयदतिरयेण प्राप्तमुर्व्वीविभागं। क्रमरहितमचेतन्नीरजीकारितक्ष्मां बलमुपहितशोभां तूर्णमायादयोध्यां॥५५॥

इति भट्टिकाव्ये प्रकीर्णकाण्डे सीतापरिणयोनाम द्वितीयः सर्गः॥

अथ। अथेत्यानन्तर्य्ये बलन्दाशरथम् तूर्णं शीघ्रम् त्वय मलरेत्यादिना पक्षे इडभावः। ज्वरत्वरेति वकारोपधयोरूट् रदाभ्यामिति नत्वम्। अयोध्यामायात् आगतम् आङ्पूर्व्वाद्यातेर्ल्लङि रूपम्। पुरुर्महान्वेगोजवः तेन योगात् पूर्य्यते वर्द्धते इति पुरुः कुर्भ्रश्चेत्यधिकृत्य पृभिदिव्यधीत्यादिना कुप्रत्ययः। दूरसंस्थन्दूरे सन्तिष्ठत इति कः। उर्व्वीविभागन्नेदयत् अन्तिकङ्कुर्व्वत् अन्तिकशब्दात् समीपवाचिनः तत्करोतीति णिच् इष्ठवद्भावादन्तिक

वाढयोर्नेदसाधाविति नेदादेशः पश्चाल्लट् शतरि शप् शयादेशः प्राप्तं विषयीकृतं चोर्व्वीविभागं भूविभागम् अतिरयेण अतिवेगेन दवयत् दूरीकुर्व्वत् पश्चाद्भागेन दूरशब्दात् पूर्व्वणिचि इष्ठवद्भावे च स्थूलदूरेत्यादिना यणादिपरलोपः पूर्व्वस्य च गुणः पश्चात्तया एव लडादयः। क्लमरहितम् अपगतश्रमम् अचेतत् कियद्दूरमागतो ऽहमित्यबुध्यमानम् चितीसंज्ञान इत्येतस्य शतरि रूपम्। अनीरजा नीरजाः कारितेति अरुर्मन इत्यादिना चावन्त्यलोपः। अस्यच्चाविति ईत्वम् नीरजीकारिता क्ष्मा भूमिर्यस्यामयोध्यायाम् तां सिक्तसम्मृष्टभूतलामित्यर्थः। उपहितशोभाञ्च ध्वजपताकाभिरारोपितशोभाम्॥५५॥

इति भट्टिकाव्यटीकायाञ्जयमङ्गलाख्यायाम्प्रकीर्णकाण्डे सीतापरिणयोद्वितीयः सर्गः॥

अथेत्यादि॥ अथानन्तरं बलं दशरथसैन्यं तूर्णं शीघ्रं अयोध्यां आयात् आङ्पूर्व्वाद्यातेर्लङि। त्वरतेः क्ते श्वीदितो निष्ठायामिति इडभावः ज्वरत्वरेति ऊठ् सह वस्य ऊट् स्वादिभ्य इति क्तस्य नत्वं। कीदृशं पुरुजवयोगात् प्रचुरजवयोगात् दूरसंस्थं नेदयदन्तिकं कुर्व्वत् सेः कृत्याख्याने ञिः वाढान्तिकेति नेदादेशः अतिरयेण अतिवेगेन प्राप्तं उर्व्वीविभागं दवयत् दूरं कुर्व्वत् ञिः दवादेशः। क्लमरहितं अतिहर्षात् अपगतश्रमं अतएव अचेतत् कियद्दूरमागतमित्यजानत् चितीसंज्ञाने शतृः। कीदृशीमयोध्यां अनीरजा नीरजाः कारिता निर्धूलीकारिता क्ष्मा भूमिर्यस्यां सिक्तसंमृष्टभूतलामित्यर्थः मनश्चक्षुरिति च्वौ सलोपः उपहितशोभां ध्वजपताकादिभिः आपितदीप्तिं॥५५॥

इति भरतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायां श्रीरामचरितेषो नाम द्वितीयः सर्गः ॥

वधेन संख्ये पिशिताशनानां क्षत्रान्तकस्याभिभवेन चैव । आढ्यम्भविष्णुर्यशसा कुमारः प्रियम्भविष्णुर्न स यस्य नासीत् ॥१॥

वधेनेत्यादि । सङ्ख्ये संग्रामे पिशिताशनानां राक्षसानां पिशितं मांसम् अशनं येषामिति तेषां वधेन हननेन हनश्च वध इति अप् प्रत्यये वधादेशः कृद्योगे कर्म्मणि षष्ठी क्षत्रान्तकस्य परशुरामस्य अभिभवेन पराजयेन च ऋदोरप् चैवशब्दो निपातसमुदायः समुच्चये तेन हेतुभूतेन यशसा आढ्यम्भविष्णुः अनाढ्य आढ्यो भूतः कर्त्तरि भुव इति खिष्णुच् अरुर्द्विषदिति मुम् कुमारो यस्य न प्रियम्भविष्णुः यस्यापि प्राक् प्रियो न जातः पश्चादपि तथैव न प्रियोभूतः स नासीत् न बभूव ॥१॥

वधेनेत्यादि । संख्ये युद्धे पिशिताशनानां राक्षसानां वधेन क्षत्रियाणामन्तकस्य परशुरामस्य अभिभवेन च हेतुना यशसा आढ्यम्भविष्णुः सम्पन्नोऽभवन् कुमारो रामो यस्य न प्रियम्भविष्णुः स नासीदेव सर्व्वस्यैव प्रिय इत्यर्थः एवशब्दो नासीदित्यत्रान्वितः चैव शब्दः समुच्चये वा । अनाढ्य आढ्यो भवति इति प्रागप्रियोऽपि भूत्वा पश्चात् प्रियो भवति भुवोऽर्थे खिष्णुखुकञाविति वे खिष्णुः खित्यनव्ययस्येति मुम् अरुर्द्विषदजन्तस्येति दीर्घः ॥१॥

ततः सुचेतीकृतपौरभृत्यो राज्येऽभिषेक्ष्ये सुतमित्यनीचैः। आघोषयन् भूमिपतिः समस्तं भूयोऽपि लोकं सुमनीचकार ॥२॥

ततः। ततः प्रियत्वाविष्णुतया अनन्तरं भूमिपतिर्दशरथो लोकं सुमनीचकार किमयं सम्यक् पालयिष्यति नवेति असुचेतसः पौरा भृत्याश्च जाताः ते सम्यक् पालनात्सुचेतसः कृता येन स सुचेतीकृतपौरभृत्यः भूयोऽपि पुनरपि लोकं समस्तं सुमनीचकार कथमित्याह राज्ये राजकर्म्मणि पालने रक्षणे सुतं रामं अभिषेक्ष्ये तदभिषेकङ्करिष्यामीति सिद्धेऽभयपदिलात्तङ् अनीचैर्महता ध्वनिना आघोषयन् घोषणाङ्कारयन् सुचेतीसुमनीशब्दौ अरुर्मन इत्यादिना साधू ॥२॥

तत इत्यादि। ततोऽनन्तरं अहं राज्ये राजकर्म्मणि सुतमभिषेक्ष्ये अभिषिक्तं करिष्ये इति अनीचैरुच्चैराघोषयन् भूमिपतिर्दशरथः समस्तं लोकं भूयः पुनरपि सुमनीचकार असुमनसं सुमनसं कृतवान्। कीदृशः असुचेतसः सुचेतसः कृताः पौरा भृत्याश्च येन स तथा अभिषेककाले किमयं सम्यक् परिपालयिष्यति नवेत्याशङ्कया पौरभृत्यानामसुचेतस्त्वमासीत् सम्यक् पालनात् तेषां सुचेतस्त्वं कृतं रामस्य प्रियत्वाविष्णुतया तदभिषेकमदृष्ट्वा पुनः पुनरसुमना लोक आसीत् रामाभिषेकाघोषणया पुनः पुनः सुमनसं चकार सुचेतीसुमनीशब्दौ पूर्व्ववत् मनश्चक्षुरित्यादिना सिद्धौ सिच्प्रशीञ् चरणे चकिति कङ्॥२॥

आदिक्षदादीप्तकृशानुकल्पं सिंहासनं तस्य सपादपीठं। सन्तप्तचामीकरवल्गुवज्रं विभागविन्यस्तमहार्घरत्नं ॥२॥

आदिक्षत्। तस्य रामस्य सिंहासनमादिक्षत् आदिष्टवान् एवं विधं कारयेति। दिशेः स्वरितेतो लुङ्क्ति शलइगुपधादित्यादिना क्सः अकर्त्तृगामिक्रियाफलत्वात्तिप् आदीप्तकृशानुकल्पञ्ज्वलिताग्नितुल्यं तस्य कारणमाह सन्तप्तचामीकरवर्णानि उत्तप्तसुवर्णवर्णानि वज्राणि यस्मिन् तथा विभागेषु विन्यस्तानि अतिमहार्घाणि रत्नानि पद्मरागादीनि यत्र सपादपीठं सह पादपीठेन ॥२॥

आदिक्षदित्यादि। दशरथंस्तस्य रामस्य सिंहासनं आदिक्षत् आदिष्टवान् दिशोऽत्र अतिसर्ज्जने टो हशसोऽनिमिजुक्त इति शक् शङ्काजेति षङ् षढोःकःसे इति कः कीदृशं सम्यक् ज्वलिताग्नितुल्यं त्यादेशेने इति कल्पः पादपीठेन सहितं अग्नितुल्यस्वर्णशोभितहीरकं विशिष्टदेशार्पितमहामूल्यपद्मरागादिकं ॥२॥

प्रास्थापयत्पूगकृतान् स्वपोषं पुष्टान् प्रयत्नादृढगात्रबन्धान्। सभर्म्मकुम्भान् पुरुषान् समन्तात्पत्काषिणस्तीर्थजलार्थमाशु ॥४॥

प्रास्था। तीर्थजलार्थम्पुरुषाम्प्रयत्नात आदरेण समन्तात्

र्व्वासु दिक्षु आशु शीघ्रमाख्यापयत् प्राहिणोत्। प्रपूर्व्वस्तिष्ठ तिर्गमने वर्त्तते तस्य हेतुमण्णन्तस्य लङि रूपं पूगकृतान् अपूगाः पूगाः कृता इति श्रेण्यादिषु च्व्यर्थवचनमिति समासः वर्गीकृतानित्यर्थः स्वपोषम्पुष्टान् स्वेपुष इति णमुल् अमैवाव्ययेनेति समासः यथाविध्यनुप्रयोगस्य। दृढो गाचबन्धो येषान्तान् संयतकायान् महाभारोद्वहनक्षमत्वात् सहेमकुम्भान् ससुवर्णकलसान् पत्काषिणः पादौ कषितुं हिंसितुं शीलं येषामिति सुप्यजातौ णिनिः हिमकाषिहतिषु चेति पद्भावः पदातीनित्यर्थः। आश्विति कृवापाजीत्यादिना उण् ॥४॥

प्राख्यापयदित्यादि। दशरथस्तीर्थजलार्थं समन्तात् सर्व्वासु दिक्षु आशु शीघ्रं पुरुषान् प्रयत्नात् आदरात् प्राख्यापयत् प्रपूर्व्वस्याधातुर्गत्यर्थः घो ञिःप्रेरणे ह्नीबीति पन् पूगकृतान् अभिधानात् अपूगाः पूगाः कृता इति च्व्यर्थे समासः संघीकृतानित्यर्थः स्वपोषं यथा स्यात्तथा पुष्टान् स्वानां ज्ञातीनां पोषो यत्र पोषणक्रियायां पोषो घञन्तः गतार्थात् पुषोणम् तदनुप्रयोगस्येति पाणिनीयादयः तन्मते स्वेन धनेन पुष्टानित्यर्थः दृढो गाचाणां बन्धो येषां भारोद्वहनक्षमत्वात् स्वर्णकलससहितान् पादकषणशीलान् कषवधे ग्रहादित्वाच्छिन् पादचारिण इत्यर्थः। अत्र पादस्य पदादेश इति पाणिनीयादयः स्वमते पद्शब्दोऽस्ति पदंग्रिश्चरणोऽस्त्रियामित्यमरः केन उभ्यते पूर्य्यते इति कुम्भोनिपातनात् ॥४॥

उत्तंप्रचक्रुर्नगरस्य मार्गान् ध्वजान् बबन्धुर्मुमुचुः स्वधूपान्। दिशश्च पुष्पैस्सकर्ल्विचित्रैरर्थेषु राज्ञा निपुणा नियुक्ताः ॥५॥

उच्चान्। ये निपुणा अर्थेषु कार्य्येषु राज्ञा दशरथेन नियुक्ताः अधिकृतास्ते नगरस्य मार्गान् पथः उच्चान् सेकवतः प्रचक्रुः। उ च्चमुच्चा गुरोश्च हल इत्यकारः सा विद्यते येषामित्यर्श आदिभ्यो ऽच् इआदेश्च गुरुमत इत्यादिना आम्प्रत्यये प्रचक्रुरित्यनुप्रयो गो न घटते कृञ्चानुप्रयुज्यते इत्यनुशब्दस्य व्यवहितनिवृत्त्यर्थत्वात् ध्वजाम्बबन्धुः उच्छ्रायितवन्तः मुमुचुः खधूपान् आकाशे धटिका दिभिर्धूपान्मुमुचुः प्रमुक्तवन्तः। दिशश्च पुष्पैस्तकरुः छादितवन्तः कृविक्षेप इत्यस्य लिटि अपस्करं कृतामिति गणः विचित्रैः नानाप्रका रैः॥५॥

उच्चामित्यादि। अर्थेषु प्रयोजनेषु राज्ञा नियुक्ता निपुणाः कर्म्म कुशला जना नगरस्य मार्गान् उच्चाश्चक्रुः सिक्तवन्तः उच सेच नेर्वीजादित्याम् भस्त्रम्याम इतिसूत्रेणाम् इति पक्षस्येवेष्टसिद्धौ अनुग्रहणं उपसर्गक्रियाविशेषणव्यवधानेऽपि तदनुप्रयोगज्ञापप नार्थ इति रामानन्दाचार्य्येण व्याख्यातं तेनात्र तेनैव सोपसर्गस्य कृञोऽनुप्रयोगः। क्रमदीश्वरेण तु सप्रादिकृभ्वस्तिभिश्चेति सूत्रं कृत्वा अयमेव श्लोको निदर्शितः। केचित्तु नगरस्य उच्चां सेकं प्रच क्रुः भग्नान् मार्गान् ध्वजांश्च बबन्धुरित्याहुः। जयमङ्गलादिस्तु उच्चानिति पठित्वा उच्चमुच्चा सात्त्वेषामिति अर्शआदित्वाद इति व्याख्यातं। ध्वजान् बबन्धुः उत्थापितवन्तः खे आकाशे धूपान् मुमुचुः त्यक्तवन्तः पुष्पैर्दिशश्चकरुश्छादितवन्तः कृशविक्षेपे चतो णुः कित्वामिति णुः॥५॥

मातामहावासमुपेयिवांसं मोहादपृष्ट्वा भरतं तदा नीं। तत्कैकयी सोढुमशक्नुवाना ववार रामस्य वन प्रयाणं॥६॥

माता। तत्पूर्व्वोक्तमभिषेकसंविधानं सोढुमशक्नुवाना असहमाना केकयी रामस्य वनप्रयाणमवार प्रार्थितवती राज्ञ इत्यर्थात्। सहेःशक्नोतावुपपदे शकधृषेत्यादिना तुमुन् तच नञा शक्यर्थस्य प्रतिषेधेऽपि न दोषः प्रतिषेधस्य वहिरङ्गत्वात् शक्नोतेः परस्मैपदित्वात् शानज् नास्ति ताच्छील्यवयोवचनेत्यादिना चानश् स्वादित्वाच्छ्नुः अचिश्नुधात्वित्यादिना उवङ् किं कृत्वेत्याह तदानीम्प्रार्थनाकाले देशान्तरावस्थितत्वात् किमेवंक्रियते न वेति न भरतम्पृष्टवती। देशान्तरावस्थितिन्दर्शयन्नाह मातामहावासमिति मातुः पिता मातामहः पितृव्यमातुलेत्यादिना निपातनात् डामहच्। आवासः निलयम् आवसत्यस्मिन्निति अधिकरणे घञ्। उपेयिवांसम् उपेयिवान् नाश्वाननूचानश्च इत्यादिना निपातितः मोहादज्ञानात् दूतप्रेषणेनापृष्ट्वा रामस्येति कर्त्तरि षष्ठी वनाय प्रयाणङ्गमनमिति चतुर्थीति योगविभागात्समासः। गत्यर्थकर्म्मणीत्यादिना चतुर्थी परत्वात्कृल्लक्षणया षष्ठ्या भवितव्यमिति चेत् न पुनर्द्वितीयाग्रहणात्परामपि षष्ठीम्बाधित्वा द्वितीयैव यथा स्यादिति। यद्येवन्द्वितीयैव स्यात् न चतुर्थी नैष दोषः द्वितीयाग्रहणस्योपलक्षणार्थत्वात् तथा च वृत्तावुभयमुक्तं ग्रामङ्गन्ता ग्रामाय गन्तेति ॥ ६ ॥

मातामहेत्यादि। तदानीं तस्मिन् समये तत्पूर्व्वोक्तमभिषेकविधानं सोढुमशक्नुवाना असमर्था केकयी मोहादज्ञानात भरतं अपृष्ट्वा रामस्य वनप्रयाणं ववार राजानं प्रार्थितवती। भरतं किम्भूतं मातामहावासमुपेयिवांसं उपगतं अपृष्ट्वेत्य न हेतुरयं एतेन भरतदोषपरिहारः कृतः मातृपितृभ्यां तत्पितरि डामहट् निपातनात् आवसन्त्यस्मिन् आवासो गृहं अधिकरणे घञ्

उपपूर्व्वाद्दिनः क्तः वसोर्घसेकाजितीम् खेःकितिर्घ इति घेः थि नाऽस्थणाविति थादेशः सहेस्तुमि होढोभाविति हस्य ढः ढभा स्तयोरिति तस्य धः झुभिरिति धस्य ढः। सहवहोरोढीति अत ओत्वं ढ्रोढ्रीति ढलोपः शक्निरुशकौ शकिवयस्ताढीढ्रौ इति शतुः शानः वनाय वनस्य वा प्रयाणं वनप्रयाणं गत्यर्थमन्यढ इति चतुर्थी ढघेक्तनीति क्तप्रयोगात् ढे षी अनयोर्व्विवक्षाधीनत्वात् चतुर्थ्या षष्ठ्या वा विग्रहः ॥ ६ ॥

कर्णेजपैराहितराज्यलोभा स्त्रैणेन नीता विकृतिं लघिम्ना। रामप्रवासे व्यमृशन्न दोषं जनापवादं सनरेन्द्रमृत्युं ॥ ७॥

कर्णे। कर्णे जपन्ति कर्णेजपाः सूचकाः मन्थरादयः स्तम्बकर्णयोरित्यच् तत्पुरुषे कृतिवहुलमिति सप्तम्या अलुक् तैराहितः आनायितो राज्यलोभो यस्याः सैवं स्त्रैणेन स्त्रिया अयं स्त्रीपुंसाभ्यान्नञ्स्नञाविति नञ् लघोर्भावोलघिमा पृथ्वादित्वादिमनिच् टिलोपः तेन विकृतिमन्यथात्वन्नीता कैकयी रामप्रवासे सति दोषम् न व्यमृशत् नालोचितवती मृश आमर्शन इति तौदादिकस्य लङि रूपम् किंस्वरूपन्दोषम् जनापवादं लोकवैमुख्यं राज्यार्हो ज्येष्ठः पुत्रोऽनया प्रव्राजित इति। नरेन्द्रस्य दशरथस्य मृत्युना सह वर्त्तमानम् ॥ ७ ॥

कर्णेजपैरित्यादि ॥ कैकयी रामप्रवासे जनापवादरूपं दोषं न व्यमृशत् नालोचितवती मृशधौ मृषि राजार्होज्येष्ठोऽनया निष्काशित इति लोकापवादः किम्भूतं नरेन्द्रस्य दशरथस्य मृत्यु

मा भवितं दीयानालोचने हेतुगर्भविशेषणमाह लर्वेजपैः पिशुनै मन्थरादिभिराहित आरोपितो राज्यस्य लोभो यस्याः कर्णे जपन्ति इति पचादित्वादच् अभिधानात् सप्तम्या अलुक्। परकीयबुद्ध्या दोषकर्तृत्वे हेतुमाह स्त्रैणेन स्त्रीसम्बन्धिना लघिम्ना लघुत्वेन विकृतिं प्रकृतेरन्यथात्वं नीता प्रापिता स्त्रिया अयं स्त्रैणः पुंस्त्रियोरिति नण् लघोर्भावो लघिमा गुणादिभ्यनभावे इति इमन् औरंगुपि दिति डिले टेर्लोपः ॥७॥

वहूनि देशांश्च निवर्त्तयिष्यन्रामं नृपः संगिरमाण एव। तथावजज्ञे भरताभिषेको विषादशङ्कुश्च मनौ निचख्ने ॥ ८ ॥

वहूनि। रामं निवर्त्तयिष्यन् रामं निवर्त्तयितुं वहूनि द्रव्याणि देशांश्च सङ्गिरमाण एव प्रतिजानान एव दास्यामीति नृपो राजा कैकेय्या तदनङ्गीकरणादवजज्ञे अवज्ञातः ज्ञा इत्ययम्भातुरव पूर्वोऽवज्ञाने वर्त्तते तस्मात्कर्मणि लिट् गमहनेत्युपधालोपः तच वृत्तेर्हेतुमत्त्वन्तात्क्रियार्थोपपदे लट्। सङ्गिरणञ्च क्रिया गिरे रौदादिकादवाङ्ग इति अधिकृत्य समःप्रतिज्ञाने इति तङ् शानच् चहत इत् आमेमुक्। इदञ्चापरमनुष्ठितन्तथा भरतो राज्ये ऽभिषिच्यतामिति भरताभिषेको मनौ मनसि निचख्ने निखातः कर्मणि लिट् गमहनेत्यादिना उपधालोपः तथा विषादः शङ्कुरिव शल्यमिव निचख्ने च्येऽलात् नायं समभिषिच्यत इति वि

पादः। संग्रामात्किल परिश्रान्तमागतन्दशरथङ्कैकेयी परि चचार तेन परितुष्टेनोक्तं किन्ते दास्यामीति सा प्राह यदार्थयिष्य ते तदा यूयन्दास्यथेति सा तदवसरमुद्धा वरद्वयमार्थितवती ए को रामस्य वनगमनं द्वितीयो राज्ये भरतोऽभिषिच्यतामिति ॥ ८॥

वस्वीत्यादि। रामं निवर्त्तयिष्यन् निवारयितुं कैकय्यै वसूनि धनानि देहीत्यस्य संगिरमाणः रामस्तिष्ठतु सर्व्वं दास्यामीति प्रति जानान एव नृपो दशरथस्तया कैकय्या तदनङ्गीकारात् अव जज्ञे अनादृतः पूर्व्वप्रतिज्ञातस्य तदभिमतप्रदानस्यानिर्व्वाहात् ज्ञागबोधने अवपूर्व्वोऽयमनादरे वर्त्तते कर्म्मणि ठौ वृतेः प्रेरणे ण्यन्तात् गृनृः गिरतेस्तौदादिकात् समः प्रतिज्ञायामिति मं भर ताभिषेकस्तत्संशयितेन विषादरूपशङ्कुस्य मतो मनसि निचख्ने चिन्तितः। यदा दशरथस्य नृपस्य मनसि भरताभिषेको निचख्ने आरोपितः तत्प्रार्थनायाः पूर्व्वं प्रतिज्ञाभयेन तत्स्वीकारात् शङ्कु रिव यो विषादः सोऽपि निचख्ने तत्प्रभृति विषादावतारात् खनेः कर्म्मणि ठौ हनगमजनेत्युङ्लोपः। पुरा परितुष्टेन राज्ञा कैकय्यै वरद्वयं देयमिति प्रतिश्रुतं तच्चेदानीमेकं रामस्य प्रवासमपरं पुत्रस्य राज्यं कैकयी प्रार्थयामासेति प्रसिद्धिः ॥ ८॥

ततः प्रविव्राजयिषुः कुमारमादिक्षदस्याभिगमं व नाय। सौमित्रिसीतानुचरस्य राजा सुमन्त्रनेत्रेण रथेन शोचन् ॥९॥

ततः। कैकेयीप्रार्थनानन्तरं राजा कुमारं रामं प्रविव्राज

यिषुः प्रव्रजन्तमेनम्प्रव्राजयितुमिच्छुः व्रजेर्हेतुमण्ण्यन्तात्सन् अस्य कुमारस्य रथेन वनायाभिगममभिगमनम्। यदवृदनिश्चिगम सैत्यप् आदिचत् आदिष्टवान् अस्येति कर्त्तरि षष्ठी वनायेति गत्यर्थकर्म्मणीति चतुर्थी सौमित्रिसीतानुचरस्य लक्ष्मणसीतास हायस्य सुमित्राया अपत्यम् वाह्वादित्वादिञ् सहचरत्वेनाभ्यर्हि तत्वात् पूर्व्वनिपातः अनु पश्चाच्चरतीति अनुचरः भिक्षासेनादा येषुचेति चकारस्यानुक्तसमुच्चयार्थत्वात् टः अनुचरस्यानुचरी च पुमान् स्त्रियां तावनुचरौ सौमित्रिसीते अनुचरौ सहायौ यस्य। कालापिकास्ततोऽन्यत्रापि पठन्ति अनधिकरणोपपदे चरेष्ट इ त्यर्थः। नीयतेऽनेनेति नेत्रं लोचनं दाम्नीत्यादिना ष्ट्रन् सुम न्त्रनामा रथवाहको नेत्रमिव यस्य रथस्य तद्यन्तास्य प्रवृत्तेः शोचन् परिदेवयमानो राजा॥ ८॥

तत इत्यादि। कैकयीप्रार्थनानन्तरं राजा शोचन् कुमारं रामं प्रव्रज्यां कारयितुमिच्छुः अस्य रामस्य रथेन वनाभिगमनं आदि ष्टवान् हृग्रहइत्यादिना सक्। व्रजेः प्रेरणे ण्यन्तात् वनायेति गत्यर्थमन्यढे इति कर्म्मणि चतुर्थी श्रीपतिदत्तादयस्तु नित्यं कर्म्म णि तुमप्रयोगिनश्चतुर्थीत्याहुः वनं गन्तुमित्यर्थः कीदृशस्य राम स्य सीतालक्ष्मणसहायस्य सुमित्राया अपत्यं इति वाह्वादित्वात् णः अनुचरतीति अनुचरः कर्म्मप्रतिरूपकोऽयमनुशब्दः तेन इन चरगष्टक् इति टक्। रेफेकेकौ च परे इति निर्द्दिशता स्त्रीपुंसयो स्तन्मात्रकृतभेदयोरेकशेषः पुमान् भवतीति सूचितं तेन अनुचरश्च अनुचरी च अनुचरौ सौमित्रिसीते अनुचरौ यस्य स तथा। यद्वा सौमित्रिसीताभ्यामनुचर्य्यते यः स तथा घञलनटोघे इति कर्म्मणि

अत्र प्राग्भावस्य विवक्षाधीनत्वात् सौमित्रेः प्राग्भावः अभ्यर्हितस्य प्राग्भाव इति ये वदन्ति तन्मते सदा सहचरत्वेन सौमित्रेरभ्यर्हितत्वं कीदृशेन रथेन सुमन्त्रो नाम कश्चित् स नेता नायको यस्येति तेन नेतृं रथे च नाथ्यास्य नेता नेतरि भेद्यवदिति विश्वः। सुमन्त्रो नेत्रं चक्षुरिव यस्येति केचित् नीञः क्तासुचिति च ॥ ९ ॥

केचिन्निनिन्दुर्नृपमप्रशान्तं विचुक्रुशुः केचन सास्त्रमुच्चैः। ऊचुस्तथान्ये भरतस्य मायां धिक्कैकयीमित्यपरोजगाद ॥१०॥

केचित्॥ राज्ञा वनगमने समादिष्टे सति केचिज्जना नृपन्निनिन्दुः कुत्सितवन्तः णिदि कुत्सायाम् अप्रशान्तं वृद्धभावेऽपि स्त्रीवशम्। केचन केचित्साश्रं सवाष्पमुच्चैः सुष्ठु विचुक्रुशुः सुतरामाक्रन्दितवन्तः तथान्ये भरतस्य मायां शाठ्यमूचुः उक्तवन्तः। तत्कृतोऽयं प्रयोगो येनात्मसमरणार्थं मातामहनिवासे स्थित इति। अपरो धिक्कैकयीं ययैवमनुष्ठितमिति जगाद गदितवान् धिगुपर्य्यादिषु त्रिष्विति त्रियोगे द्वितीया ॥ १० ॥

केचिदित्यादि। राज्ञि रामस्य वनगमनमादिष्टवति सति केचिज्जना नृपं निनिन्दुः णिदि कुत्सने कीदृशं अप्रशान्तं वार्द्धकेऽपि स्त्रीवशीभूतत्वात् शान्तिरहित केचन सास्रं सवास्रं उच्चैर्महाध्वनिना विचुक्रुशुः क्रन्दितवन्तः केचित् केचन इत्यत्र किमःक्तन्ताश्चिचणाविति विद्यामिवासदृचेण चिचणौ किम्वा असाकल्येतु चिचणाविति

कोपात् विभक्त्यन्तविमः परसमयो: प्रयोग: अन्ये भरतस्य माया माये ऊचुः मातरमेवं राज्यलोभाय नियुज्य स्वदोषहरणार्थं मातामहगृहं गतवानिति मायार्थ: । अपर: कश्चित् केकयीं धिगिति जगाद धिक्समयेति द्वितीया धिगिति निन्दायां अपर इत्यत्र एकवचनात् अन्य एव लोक: केकयीं निन्दति बहवस्तु राजानं केकय्या: स्त्रीत्वेन स्वभावतोमन्दबुद्धित्वं नृपस्य तु तथाविधस्यापि स्त्रीवचनान्मतिभ्रंश इति महान् दोष इति व्यज्यते तेन प्रक्रमभङ्गोऽत्र न दोषावह: ॥१०॥

गतो वनं श्वोभवितेति राम: शोकेन देहे जनतातिमात्रं । धीरास्तु तत्र च्युतमन्यवोऽन्ये दधुः कुमारानुगमे मनांसि ॥११॥

गतो ॥ श्व आगामिनि दिवसे वनङ्गतो रामो भवितेति तस्य जनता जनसमूह: ग्रामजनबन्धुइत्यादिना तल् देहे दग्धा कर्मणि लिट् अतएकहल्मध्येत्वाभ्यासलोपौ गत इति भूतकाल: श्वोभवितेति भविष्यत्कालेन सम्बध्यमान: साधु: धातुसम्बन्धे प्रत्यया इति । ये तु तत्र धीरा: ते च्युतमन्यवो विगतशोका: सन्त: कुमारानुगमे कुमारस्य पश्चाद्गमननिमित्तं मनांसि दधुः कृतवन्त: राममनुव्रजाम इति निमित्तात्कर्मसंयोगे सप्तमीति । मनांसीति कर्मणा योगात् ॥११॥

गत इत्यादि । राम: श्वो भाविदिने वनं गतो भविता इति हेतो: शोकेन जनता जनसमूहोऽत्यर्थं देहे दग्धा दहे: कर्मणि को तृक

स्येति अतएवं खिलोपस्य। जनखलादित्वाज्जनान्तः संघे स्त्रीत्वम भिधानात् भवितेति भवद्भूतभयो इति भविष्यति ऌोस्यःप्रभृति भ विष्यत्कालमात्रे अभिधानात् स्यइति न व्यर्थं तत्सम्बन्धात् गत इति धातुसम्बन्धे प्रत्यया इतिवचनात् भविष्यत्कालेऽपि साधुः अ न्ये तु तत्र ये धीरास्ते च्युतमन्यवो विगतशोकाः सन्तः कुमारस्य रा मस्य पश्चाद्गमने मनांसि दधुः धृतवन्तः धाञ्छन्दसि रूपं अनुगम इति ढेनार्थादिति सप्तमी विषयसप्तमी वा॥११॥

प्रस्थास्यमानावुपसेदुषस्तौ शोशुच्यमानानिदमूच तुस्तान्। किं शोचतेहाभ्युदये वतास्मान् नियोगलाभे न पितुः कृतार्थान्॥१२॥

प्रस्था। तौ रामलक्ष्मणौ प्रस्थास्यमानौ गमिष्यन्तौ समव प्रविभ्यःस्थ इति तङ् जनान् इदं वक्ष्यमाणमूचतुः उक्तवन्तौ ब्रु वीत्यर्थग्रहणात् वचेर्द्विकर्मकता उपसेदुषस्तौ ढौकितवतः ज नान् भाषायांसदवसेत्यादिना क्वसुः। शोशुच्यमानान् अत्यर्थं शोकङ्कुर्वतः भृशार्थे यङ् किमूचतुरित्याह किं शोचतेति हे जनाः कस्मादस्मान् शोचत परिदेवयध्वम् विधावपूर्वार्थप्रकाशने लोट् इहाभ्युदये वतशब्दो विस्मये तस्मिन् आश्चर्यभूते अभ्युदये वृद्धौ सत्याम्। कुत इत्याह पितुर्नियोगलाभेन वनगमना ज्ञालाभेन कृतार्थान् लब्धप्रयोजनान् कृतार्थत्वादशोच्या वय मित्यर्थः॥१२॥

प्रस्थास्यमानावित्यादि। प्रस्थास्यमानौ गमिष्यन्तौ तौ रामलक्ष्मणौ उपसेदुषः उपसन्नान् जनानिदं वक्ष्यमाणं ऊचतुः। किम्भूतान् शोशुच्यमान् पुनःपुनरतिशयेन शोचतः सूचसूचेत्यादिना यङ् खेर्नुः प्रस्थास्यमानाविति प्रतिष्ठानिर्घ्येत्यादिना संपूर्व्वात् तिष्ठतेर्म्मे स्यमानः। उपसेदुष इति उपपूर्व्वात् सदेश्चीपसवदिति क्वसुः वसोर्थसे इतीम् तृफलेति अतएत्वं खिलोपश्च वसोर्व्वः सेमपीति उः किमूचतुरित्याह इहाभ्युदये इष्टौ सत्यां किमस्मान् यूयं शोचत विधिनिमन्त्रणेत्यचादिशब्दात् विधावपूर्व्वप्रकाशने गी व न्नेति खेदानुकम्पासन्तोषविस्मयामन्त्रितेष्वपीति वर्द्धमानः अभ्युदयः कुत इत्याह पितुर्नियोगलाभेन वनगमनाज्ञालाभेन कृतार्थान् लब्धप्रयोजनान् अस्मानिति दयोरप्यस्मदो वङ्कत्वमिति परः स्वमते वाह्याध्यात्मिकभाववङ्कत्वविवक्षया सीतान्वितत्वाद्वा॥१२॥

असृष्ट योयश्च भयेष्वरक्षीद्यः सर्व्वदास्नानपुषत्स्वपोषं। मद्योपकारस्य किमस्ति तस्य तुच्छेन दानेन वनस्य मोक्षः॥१३॥

असृष्ट यः। असृष्ट जनितवान् सृजेर्दैवादिकस्यात्मनेपदित्वात् लुङि रूपम् न तौदादिकस्य परस्मैपदित्वात् सृजिदृशोरित्यम् यश्च भयेषु सत्सु अरक्षीत् पालितवान् रक्षपालन इत्यस्य लुङि रूपम् यः सर्व्वदा सर्व्वकालं सर्व्वैकान्येत्यादिना दाप्रत्ययः य स्नापुषत् स्वपोषमनेनापुषत् पुष्टवान् पुषेर्लङि रूपम् पुषादित्वा दङ् स्वपुष इति णमुल् अमैवाव्ययेनेति समासः अथाविष्ठनु

प्रयोगश्च तस्य पितुः सम्बन्धिनो महोपकारस्य किमस्ति मोक्षः प्रत्युपकारो नैवेतिभावः केनेत्याह तुच्छेन असारेण वनस्य यानेन यातेर्भावे ल्युट् वनस्येति शेषसामान्ये षष्ठी कृल्लक्षणायास्तु षष्ठ्या गत्यर्थकर्म्मणि चतुर्थी बाध्यमानत्वात् ॥ १३ ॥

असृष्टेत्यादि। योऽस्मान् असृष्ट जनितवान् सृजोविसर्गे च स्म भयेषु अरक्षीत् रक्षेर्लुङ् रूपं यः सर्व्वदा सर्व्वकालं अस्मान् स्व पोषं अपुषत् स्वेन धनेन पुष्टवान् स्वपोषमिति चणमुलाभीक्ष्ण्येद्वत्य च वाशब्दस्य व्यवस्थाकाचित्वाच्चणम् तदनुप्रयोगस्याभिधानात् अपुषदिति शासत्विद्युदिति ङः सर्व्वदा इति सर्व्वैकात्काले दाच् तस्य पितुः सम्बन्धिनो महोपकारस्य तुच्छेन लघीयसा वनस्य गमनेन किं मोक्षः प्रत्युपकारोऽस्ति नास्त्येवेतिभावः वनस्येति ढथे कृतीति कर्म्मणि षष्ठी ॥ १३ ॥

विद्युत्प्रणाशं स वरं प्रनष्टो यदोर्द्धशोषं तृणवद्विशुष्कः। अर्थे दुरापे किमुत प्रवासे न शासने ऽवास्थित यो गुरूणां ॥ १४ ॥

विद्युत् ॥ अर्थे कार्य्यविशेषे दुरापेऽपि कृच्छ्रसाध्येऽपि ईषद्दुःस्विल्यादिना खल गुरूणां यच्छासनमादेशः तस्मिन् योनावास्थित नावस्थितवान् अवपूर्व्वात्तिष्ठतेर्लुङ् समवेत्यादिना तङ् स्थाघोरिच्चेति किच्चमित्त्वाद्ध्रस्वादङ्गादिति सिचोलोपः स वरं विद्युत्प्रणाशं प्रनष्टः विद्युदिवोत्पत्त्यनन्तरमेव विनाशमुक्तः उपमाने कर्म्मणि चेति चकारात् कर्त्तोर्जीवपुरुषयोरित्यतः

कर्त्तृग्रहणानुवृत्तौ कर्त्तृवाचिनि विद्युच्छब्द उपपदे णमुल् उप सर्गादसमास इत्यादिना णमुल् यदेत्यथवा स ऊर्द्धशोषम्शुष वदिशब्दः ऊर्द्धेशुषीत्यादिना णमुल् उभयत्रामैवेत्यादिना समासः यथा विध्यनुप्रयोगस्य किमु प्रवासे किम्पुनः प्रवासविषये यच्छासनन्तत् तावदनवस्थितस्य सुतरामेव पूर्व्वोक्तं प्रयुज्यते ॥१४॥

विद्युदित्यादि। दुरापे दुःखेन प्राप्येऽर्थे प्रयोजने गुरूणां शासने आज्ञायां यो न अवास्थित न तस्थौ स वरं विद्युत्प्रणाशं प्रनष्टो विद्युदिव उत्पत्त्यनन्तरमेव नष्टः णमन्तेऽत्र वाशब्दस्य व्यवस्थावाचित्वात् कर्त्तुरुपमानात् नप्रयोगतार्थाणमम् तदनुप्रयोगस्त्वभिधानात् शास्त्रेणोण इति शास्त्रनशोणलं दुराप इति ईषद्दुःषोः खल्भावठे इति खल् अवास्थितेति अवपूर्व्वात्तिष्ठतेः प्रतिज्ञानिर्णय इति सं श्वासिः स्थाद्योर्ङिष्टीमिमणुरिति ङित्त्वस्य गुणाभावः अस् स्थादिति सेर्लोपः। शासनं राजदत्तोर्व्वीलेखाज्ञाशास्त्रशास्तिध्विति विश्वः। वरं मनागिष्टे देवकल्पितकामावोर्व्वरः श्रेष्ठे पुंसलिषु। मनागिष्टे भवेत् क्लीवमन्ये त्वाऊसदव्ययमिति रन्तिदेवः यदा अथवार्थे तृणवदूर्द्धशोषं विशुष्क ऊर्द्धशुष्क इत्यर्थः ऊर्द्धाच्छशेर्गतार्थाच्च तदनुप्रयोगस्याभिधानात् किमु सुप्रवासे सुकरप्रवासविषये यत् शासनं तच्च योनावास्थित स किं पुनः सुतरामेव पूर्व्वोक्तं युक्तं किमुतेति क्वचित् पाठः॥१४॥

पौरा निवर्त्तध्वमिति न्यगादीत्तातस्य शोकापनुदा भवेत। मा दर्शतान्यं भरतस्य मत्तो निवर्त्तयेत्याश्रयं स्म हतं॥१५॥

पौराः॥ हे पौराः यथागतन्निवर्त्तध्वम् विधा लोट् इति तान्म्यगादीत् उक्तवान् रामः गदेरतोहलादेरिति वृद्धिः इट इटीति सिचोलोपः तातस्य पितुः शोकापनुदाः शोकस्यापहर्त्तारो भवेत नुन्दशोकयोरित्यादिना कः भवतेर्विधौ प्रार्थनायां वा लिङ् मध्यमपुरुषबहुवचनम् भरतञ्च मत्तो मत्तः सकाशात् अस्मदः पञ्चम्यास्तसिल् प्रत्ययोत्तरपदयोश्चेति मदादेशः अन्यं भरतम्मा दर्शत मा द्रष्टारः स्थः अपि तु योऽहं सएव भरतः स च प्रतिष्ठितः राज्यम्पालयिष्यतीत्येव न्यगादीत् दृशेर्माङि लुङ् इरितोवेत्यङ् ऋदृशोऽङि गुणः निवर्त्तय रथमिति सूतञ्च सुमन्त्रमाहस्म लट् स्म इति लट् ब्रुवः पञ्चानामित्याहादेशः तिपोणल् ॥१५॥

पौरा इत्यादि। हे पौराः पुरवासिनो यूयं निवर्त्तध्वं निवृत्ता भवत विधिनिमन्त्रणेति विधौ गी। तातस्यास्मत्पितुः शोकापहर्त्तारो यूयं भवेत विधिनिमन्त्रणेति विधौ प्रार्थनायां खौ ख्याया युष्मामामिति याशब्दस्य इत्वं शोकापनुदा इति इगुपधज्ञा इति इगुपधत्वात् नुदः कः मत्तोऽन्यं भरतं यूयं मा दर्शत अहमिव सोऽपि पालयिष्यतीति ध्वनिः। दृशिरौप्रेक्षणे मा योगे टौ इरनुबन्धात् शासुलिद्युदिति विकल्पितोङः दृशोर्गुरिति गुणः मत्त इति अन्यारभ्येति पञ्चमी तस्रकेरिति तस् वाङ्ख्यात् त्यदांटेरकाविति न टेरइत्युक्तं रामो न्यगादीत् उक्तवान् हसादेः सेम इतिवृद्धिः त्वं रथं निवर्त्तयेति सूतं सारथिं सुमन्त्रमाहस्म की स्मेनातीत इति स्मेन योगेऽतीते की पञ्चतिप्पञ्चणल्वाहस्येति तिपोणप् ब्रुव आहादेशः॥१५॥

ज्ञात्वेङ्गितैर्गत्वरतां जनानामेकां शयित्वा रजनीं स पौरः। रचन् वने वासकृताद्भयात्तान् प्रातश्छलेनापजगाम रामः॥१६॥

ज्ञात्वा। निवर्त्तध्वमित्युक्ते ये तथानिवृत्ताः तेषां जनानां रामो गत्वरताङ्गमनशीलतां ज्ञात्वा गत्वरश्चेति निपातितः तैरिङ्गितै रभिप्रायसूचकैश्चेष्टितैः इङ्गतेर्भावे निष्ठा वनेवास इति सप्तमीति योगविभागात् समासः शयवासवासिष्विति विभाषा सप्तम्या अलुक् तेन कृतात्सिंहादिभयात् रचन् पालयन् तान् पौरान् सपौरः पौरैः सह एकां रजनीं शयित्वा कालाध्वनोरिति द्वितीया शयित्वेति नत्वासेडिति कित्त्वप्रतिषेधात् गुणो भवति प्रातः प्रातः काले छलेन सन्ध्यावन्दनादिव्याजेन अपजगाम गतवान्॥१६॥

ज्ञात्वेत्यादि॥ निवर्त्तध्वमित्युक्तेऽपि तथानिवृत्तानामिङ्गितै रभिप्रायबोधकैश्चेष्टितैर्गत्वरतां गमनशीलतां ज्ञात्वा रामः सपौरः पौरैः सह एकां रात्रिं शयित्वा तान् जनान् वनेवासकृताद्भयात् रचन् प्रातश्छलेन सन्ध्यावन्दनादिव्याजेन अपजगाम इङ्गितैरिति इगिगत्यां भावे क्तः गत्वरतामिति क्वरप् मस्य तस्य रजनीमिति देशाध्वकालेति कर्मसंज्ञा शयित्वेति सेमचुधेत्यादिना किन्निषेधात् पुघूङ इति गुणः वनेवास इति अकालवाचिनः शयवासवासिष्विति सप्तम्या अलुगिति परः। खमते सरसिजमित्युदाहरता क्वचित् समासे विभक्तेरलुगिति सूचितं॥१६॥

अस्राघुरस्रं करुणं रुवन्तो मुहुर्मुहुर्न्यश्वसिषुः कवोष्णं। हा राम हा कष्टमिति ब्रुवन्तः पराङ्मुखैस्ते न्यवृतन्मनोभिः ॥ १७ ॥

अस्राघुः॥ ते पौरा राममपश्यन्तः करुणं रुवन्तो विलपन्तः रुशब्द इत्यस्य शतरि रूपम् अस्रम् अश्रु अस्राघुः मुक्तवन्तः सृजे स्तौदादिकस्य परस्मैपदिनः सिचि सृजिदृशोरित्यम् हलन्तलक्ष णा वृद्धिः चोःकुःखरिचेति चर्त्वम् मुहुर्मुहुः भूयो भूयः कवोष्ण मीषदुष्णमन्तःसन्तापात् कवञ्चोष्णे इति कोः कवादेशः न्यश्वसिषुः श्वसेर्लुङ् ह्म्यन्तेत्यादिना श्वसेर्वृद्धिप्रतिषेधः अतोहलादेर्लघोरि ति विकल्पस्य प्राप्तत्वात् हा राम हा कष्टं कष्टमिति ब्रुवन्तः पराङ्मु खैः येन गतो रामस्तेन गतैर्मनोभिरित्यर्थभूतैः न्यवृतन् निवृत्तव न्तः द्युद्भ्योलुङीति परस्मैपदविकल्पात् द्युतादित्वादङ् ॥ १७ ॥

अस्राघुरित्यादि। ते पौरा राममपश्यन्तः करुणं रुदन्तोविल पन्तः अस्रं नेत्रजलं अस्राघुरुत्सृष्टवन्तः रुदन्त इति रुदरोदे श तृः अस्राघुरिति सृजीअविसर्गे व्यां सिः वर्द्धोऽकिदिति ऋकारस्य रः अजवदेति अनिमत्वात् भिः अक्षाजेति षङ् षढोःकःसे इति कः किलादिति षः अनुस्विदेरिति अनत्वम् कवोष्णं ईषदुष्णं अन्तःस न्तापात् कत्कत्रौ चान्युष्णे इति ईषदर्थे कवादेशः मुहुर्मुहुर्वारं वारंन्यश्वसिषुः निःश्वसितवन्तः हसादेःसेम इत्यादौ श्वसवर्जनात् श्वसेर्न भिः हा राम हाकष्टमिति ब्रुवन्तः ते पौराः पराङ्मुखैराम दिगनुसारिभिरपूर्णकामत्वात् परिभूतैर्वा मनोभिरुपलक्षिताः सन्तो निवृत्ताः वृतेर्द्युतादित्वात् वासुलि द्युदिति ङः तेनैव लोपोऽ

तोऽदेचोरित्यकारलोपः। साधनहेतुविशेषणमिति विशेषणे तृतीया हा रामेति हाशब्दयोगे षष्ठ्यर्थे द्वितीया अत्र तु तदभाव इति श्री पतिः सामान्येन हाशब्दं प्रयुज्य रामः सम्बुध्यते इति दीर्घाः अ अ मुद्धाविति हादियोगे द्वितीयानिषेधार्थं क्रमदीश्वरसूत्रं समते हाशब्दवाच्येन कष्टेन नाच रामस्य योगोविवक्षितः किन्तु पौरा णामेव तद्योगाभावान्न द्वितीया॥१७॥

सूतोऽपि गङ्गासलिलैः पवित्वा सहाश्वमात्मानमन ल्पमन्युः। ससीतयोराघवयोरधीयन् श्वसन् कदुष्णं पु रमाविवेश॥१८॥

सूतो। सूतोऽपि सुमन्त्रः सहाश्वमश्वैः सह अनल्पमन्युः प्रवृद्ध शोकः राघवयोः रामलक्ष्मणयोः सरूपाणामित्येकशेषः ससी तयोः सीतासहितयोः अधीयन् स्मरन् इक्स्मरण इत्यस्य शतरि रूपं यणादेशः अधीगर्थेति कर्मणि षष्ठी श्वसन् कदुष्णम् ईषदु ष्णाङ्कवश्चोष्ण इति चकारात् कदादेशः गङ्गातटात्प्रतिनिवृ त्य पुरमयोध्यामाजगाम आगतवान् गङ्गासलिलैः आत्मनो वाश्वमाभ्यन्तरञ्च पवित्वा पवित्रीकृत्य पूङश्चेति विकल्पेनेट् पूङः क्त्वा चेति कित्त्वप्रतिषेधात् गुणः॥१८॥

सूत इत्यादि। सूतः सारथिः सुमन्त्रोऽपि गङ्गाजलैः सहाश्वं आ त्मानं पवित्वा पवित्रीकृत्य सीतासहितयो रामलक्ष्मणयोरधीयन् स्मरन् कदुष्णं श्वसन् पुरमयोध्यां आविवेश प्रविष्टवान् अनल्प मन्युः प्रवृद्धशोकः गङ्गासलिलैः पवित्वा इत्यनेन गङ्गापर्य्यन्तं तद्

मनं ध्वन्यते पूङ्क्तिशुदितश्च इति विभाषित इम् सेमसुधेत्यादिना किस्वनिषेधात् पुगुधूक इति गुणः मसीनयोरिति सङ्घःसेवेति वङ् ओष्ठ्याः सादेशः। राघवयोरिति समार्थेनेत्यादिना कर्म्मणि षष्ठी अधीयन्निति अधीकलसमृत्यां इणवदिक इति वाक्यात् यिणोऽच्य णाविति यादेशः कचिन्न स्यात् आतिदेशिककार्य्यमनित्यमितिन्या यात् तेनात्र अध्वोरन्वयीति इयादेशः कदुष्णमिति कत्कवौचेति कोः कदादेशः॥१८॥

प्रतीयुषा पूर्द्दहशे जनेन द्यौर्भानुशीतांशुनिराकृते व। राजन्यनक्षत्रसमन्वितापि शोकान्धकारक्षतसर्व्वचेष्टा॥ १९ ॥

प्रती। जनेन रामानुयायिना प्रतीय प्रतिनिवृत्य पूरयोध्या ददृशे दृष्टा कर्म्मणि लिट् प्रतीय इति ईङ्गताविति अस्य रूपन्न पुनरिणः तस्य हि तुकि प्रतीत्येति स्यात्। षत्वतुकोरसिद्ध इत्येकादेशस्यासिद्धत्वात् प्रतीयुषा सा ददृशे इति पाठान्तरम् प्रतिनिवृत्तेन सा पूर्द्दहशे दृष्टेत्यर्थः। अस्मिन् पाठे तु उपेयिवानित्यादिना इणः क्वसौ रूपमिदमव्ययमत्रोपसर्गस्यातन्त्रत्वात्। शोकोऽन्धकार इव शोकान्धकारः तेन क्षता नीतानुष्ठेयकर्म्मणि चेष्टा परिस्पन्दो यस्यां पुरि सा तथोक्ता राज्ञोऽपत्यानि राजश्वशुराद्यत् राजन्याः क्षत्रियाः येषाभावकर्म्मणोरिति प्रकृतिभावः राजन्या नक्षत्राणीव तैः समन्वितापि द्यौः भानुशीतांशुविनाकृतेव द्यौराकाशः यथा नक्षत्रसमन्वितापि रात्रौ भानुचन्द्राभ्यां विनाकृता रहिता अन्धकारक्षतसर्व्वचेष्टा तद्वत्सापि भानुचन्द्रस्थानीययोः राघवयोर्विरहात्॥१९॥

प्रतीत्यादि। जनेन रामानुयायिना प्रतीय प्रतिनिवृत्य सा पूरयोध्या ददृशे कर्म्मणि ठी प्रतीयेति इयङ्गत्यामित्यस्य रूपं न लिण्समागमप्रसङ्गात् प्रतीयुषेति पाठे प्रतिपूर्ब्बादिणः क्वसुः प्रतीयिवःशब्दस्य वसोर्ब्बः सेमपीति सेमवस्थीत्वं प्रतीयुषा प्रतिनिवृत्तेन जनेनपूर्ददृशे इतियोजना कीदृशी पूः शोकोऽन्धकार इव तेन घ्नता नाशिता सर्व्वेषां चेष्टा सर्व्वा वा चेष्टा यस्यां सा तथा। राजन्याःक्षत्रिया नक्षत्राणीव तैः समन्वितापि पूः सूर्य्यचन्द्राभ्यां रहिता द्यौराकाशमिव यथा नक्षत्रसमन्वितापि द्यौः सूर्य्यचन्द्राभ्यां निराकृता अन्धकारहतसर्व्वचेष्टा तद्वत् सापि सूर्य्यचन्द्रतुल्ययोराघवयोरभावादितिभावः। राजन्य इति राज्ञां समूह इति गर्गादित्वात् ष्यञः मन्वर्ज्जानित्यादिना नलोपनिषेधः ॥१९॥

विलोक्य रामेण विना सुमन्त्रमच्योष्ट सत्वान्नृपतिश्च्युताशः। मधूनि नैषीद्धलिपन्न गन्धैर्मनोरमे न व्यवसिष्ट वस्त्रे॥ २०॥

विलोक्य। रामेण विना सुमन्त्रं विलोक्य दृष्ट्वा नृपतिर्दशरथः सत्वात् स्वभावादच्योष्ट च्युतः च्यवतेरकर्म्मकाल्लुङ् गतोऽपि मद्वचनमतिक्रम्य आगच्छेद्राम इति अस्य या आशा सा च्युता यस्य स च्युताशः सत्वात् च्युतश्च मधूनि पातुन्नैषीत् नेष्टवान् नेटीति सिचि वृद्धिप्रतिषेधः। गन्धैश्चन्दनादिभिर्नालिपत् लिपेर्लिपिसिचिह्वश्चेत्यङ् मनोरमे चेतोहारिणी वस्त्रे न व्यवसिष्ट न परिहितवान् वस आच्छादने इत्यस्मात् लुङ् अनुदात्तेत्वात्तङ्॥ २०॥

विलोक्येत्यादि। रामेण विना सुमन्त्रं विलोक्य नृपतिर्दशरथः

बलात् स्वभावात् व्यवसायाद्वा अधीरः च्युतः च्युतोऽकर्म्मकात् टो मतोऽपि रामः कदाचित् पौराणामनुरोधान्मर्य्यादामतिक्रम्य आगच्छेदित्याशा च्युता यस्य स तथा मधूनि नैषीत् इषुइच्छा यां टो मन्ये चन्द्रमादिभिर्न व्यलिपत् वसलवाख्यावियेति ङः मनो रमं वसुदयं न व्यवसिष्ट न परिच्छिन्नवान् वसनङ्ग्राच्छादने सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मनि व्यवसाये च वित्ते प्राणिषु जन्तुषु इति विश्वः॥२०॥

आसिष्ट नैकत्र शुचा व्यरंसीत् कृताकृतेभ्यः क्षिति पालभाग्भ्यः। स चन्दनोशीरमृणालदिग्धः शोकाग्नि नागाद्युनिवासभूयं॥२१॥

आसिष्ट। एकत्र स्थाने शुचा शोकेन नासिष्ट नोपविष्टः आसेरात्मनेपदिनो लुङ्। कृतानि चाकृतानि चेति क्तेन नञ् विशिष्टेनानञिति समासः असमापितेभ्य इत्यर्थः क्षितिपालस्य जन्ते यानि दूतप्रेषणादीनि तेभ्यः क्षितिपालभाग्भ्यः व्यरंसीत् विरतः विमुखोऽभूदित्यर्थः जुगुप्साविरामप्रमादार्थानामुपसंख्या नमिति अपादानसंज्ञा रमेर्लुङ् व्याङ्परिभ्योरम इति तिप् यमिरमेत्यादिना सगिटौ। स एवम्भूतो राजा चन्दनोशीरमृ णालैः शोकाग्निप्रतीकारभूतैर्दिग्ध उपलिप्तोऽपि उद्वेगाग्निनैव द्युनिवासभूयन्देवलमगात् गतवान् दिहेर्निष्ठायान्दादेर्धातोर्घ इति घः झषस्तथोर्धोधः झलांजश्झशीति जश्त्वम् दिवि निवासो येषां ते द्युनिवासाः देवाः तेषां भाव इति भुवोभाव इति क्यप् ॥२१॥

आसिष्ट इत्यादि। शुचा शोकेन एकत्र एकस्थाने स आसिष्ट आसलङ् उपविष्टे। कृताकृतेभ्यः क्षितिपालभाग्भ्यः राजकर्त्तव्यकृतसम्प्रेषणादिभ्यो व्यरंसीत् विरतवान् षे पं परानुइत्यादिना वि पूर्व्वात् रमेः पं यमरमेति इमसनौ कृतावयवसम्बन्धात् कृतं अकृतावयवसम्बन्धाचाकृतं इति एकार्थत्वात् कर्म्मधारयः। अनञः कान्तस्य तेन सनञेति कर्म्मधारय इति परः क्षितिपालं भजन्ते इति ढाङ्गजवहेति विण् स ईदृशो राजा चन्दनोशीरमृणालैस्तापोपशान्तिसाधनैर्दिग्धो लिप्तोऽपि शोकाग्निनैव हेतुना द्युनिवासभूयं देवत्वमगात् दिवि निवासोयस्य इति विग्रहः निवसन्त्यत्रेति घञि द्यौर्निवासोयस्येति वा उइत्सुङिति उङ् तस्य भवनं भूइनः क्यबि ति भुवोभावे क्यप् दिग्ध इति दिहौउपलेपे क्तः दादेर्घः ढभात्त योरिति तस्य धः झपझसोरिति घस्य गः उशीरं वीरणमूलं॥२१॥

विचुक्रुशुर्भूमिपतेर्महिष्यः केशान् लुलुञ्चुः स्ववपूंषि जघ्नुः। विभूषणान्युन्मुमुचुः क्षमायां पेतुर्बभञ्जुर्वलयानि चैव॥२२॥

विचु॥ भूमिपतेराज्ञो महिष्यः पत्न्यः अविमह्यादिषष्ट् इत्यादिकः ष्टिषच् विचुक्रुशुः रुदितवत्य इत्यर्थः क्रुश आह्वानेइति तथा केशान् लुलुञ्चुः उत्पाटितवत्यः स्ववपूंषि शरीराणि जघ्नुस्ताडितवत्यः विभूषणानि हारादीनि उन्मुमुचुर्मुक्तवत्यः क्षमायाम्भुवि पेतुः वलयानि अवैधव्यचिह्नानि बभञ्जुः चूर्णितवत्यः एते लिङन्ताः पेतुरेत्वाभ्यासलोपौ॥२२॥

विचुक्रुशुरित्यादि॥ भूमिपतेर्दशरथस्य महिष्यः विचुक्रुशुः क्रन्दितवत्यः हाहा स्वामिन्निति नृपमाक्रुष्टवत्यो वा यद्यपि कृताभिषेका महिषीत्यमरः सा चैकैव तथाप्युपचारात् पत्नीमात्रेऽपि निरूढ़ामेव कृताभिषेकत्वमिति केचित् केशान् लुलुञ्चुः उत्पाटितवत्यः स्वात्वपित्विर्देति अकित्पक्षे उङ्नलोपाभावः स्ववपूंषि जघ्नुः ताडितवत्यः विभूषणानि हारादीनि उन्मुमुचुः त्यक्तवत्यः समायां भुवि पेतुः तृफलेति पतेरेत्वं खिलोपश्च वलयानि अवैधव्यलक्षणानि वभञ्जुः सर्व्वत्र या उस्॥ २२॥

ताः सान्त्वयन्ती भरतप्रतीक्षा तं बन्धुता न्यक्षिपदाशु तैले। दूतांश्च राजात्मजमानिनीषून् प्रास्थापयन्मन्त्रिमतेन यूनः॥२३॥

ताः सां॥ बन्धुता बन्धुसमूहः ग्रामजनबन्धुसहायेभ्यस्तल्ता महिषीः सान्त्वयन्ती संस्थापयन्ती सान्त्वङ्करोतीति णिच्। तं दशरथं मृतं तैले न्यक्षिपत् निक्षिप्तवती आशु शीघ्रं माभूत्पूतिरिति क्षिपेर्लुङ् पुषादित्वादङ् कस्मान्न्यक्षिपदित्याह भरतप्रतीक्षा तेन संस्कारः कर्त्तव्य इति सा भरतं प्रतीक्षते ईक्षिक्षमिभ्यां चेत्युपसङ्ख्यानात् दूतान् प्रास्थापयत् प्रहितवती राजात्मजं भरतमानिनीषून् आनेतुमिच्छून् अन्यथा कैकेयीवैमुख्याद्भरतो अपि वैमुख्यात् दूता अपि नानेतुमिच्छन्ति तथापि मन्त्रिमतेन न स्वमतेन यूनः तेषाङ्गन्तुं समर्थत्वात्॥ २३॥

तादित्यादि॥ बन्धुता बन्धुसमूहः ता महिषीः सान्त्वयन्ती

आश्वासयन्ती तं मृतं दशरथं शीघ्रं पूतिगन्धाशङ्कया तैले न्यषिपत् चिपस्तुदादित्वात् कुशे न्यचिपदित्याह भरतप्रतीचा भरतं प्रतीचते इति पचादित्वादच् भरते प्रतीचा यस्या इति वा कूलोना मन्त्रिणो मतेन बुद्ध्या केकयीं प्रति क्रोधेन भरते वैमुख्यात्तु स्वेच्छया प्राख्यापयत् प्रहितवती राजात्मजं भरतं आनिनीषून् आनेतुमिच्छून् ये स्वतएव भरतमानेतुमिच्छन्ति तत्प्रस्थापनं युक्तमिति भावः यूनस्तरुणान् शीघ्रगमनसामर्थ्यात् बन्धुतेति जन स्नेति समूहार्थे तः सान्त्वयन्तीति सान्त्वत्क सान्त्वने शतृ:॥२३॥

सुप्तो नभस्तः पतितं निरीक्षाञ्चक्रे विवस्वन्तमधः स्फुरन्तं। आख्यदसन्मातृकुले सखिभ्यः पश्यन् प्रमादं भरतोऽपि राज्ञः॥२४॥

सुप्तो। भरतोऽपि मातृकुले वसन् सखिभ्यो मित्रेभ्यः आख्यत् कथितवान् ख्यातेर्लुङ् अस्यतिवक्तीत्यादिनाऽङ् क्रियाग्रहणङ्कर्त्तव्यमिति सम्प्रदानसंज्ञायाञ्चतुर्थी। किमाख्यदित्याह अहं सुप्तः सन् नभस्तो नभस्तलात् आकाशात्पतितं विवस्वन्तमादित्यं स्फुरन्तञ्ज्वलन्तन्निरीक्षांचक्रे निरीक्षितवान् ईचेरिजादेरित्याम्। उत्तमविषये सुप्तप्रमत्तावस्थायां चित्तव्याक्षेपात् परोक्षे लिट् पश्यन् विलोकयन् राज्ञो दशरथस्य प्रमादमनिष्टम्॥२४॥

सुप्त इत्यादि॥ भरतोऽपि मातृकुले वसन् सन् राज्ञो दशरथस्य प्रमादं अनिष्टं पश्यन् वितर्कयन् सखिभ्यो मित्रेभ्य आख्यत्

कथितवान् वक्तास्येति ङः तादर्थ्ये चतुर्थी यदभिप्रेत्य धात्वर्थस्तत्र चतुर्थीति परः किमाख्यदित्याह सुप्तोऽहं नभस्त आकाशात् पतितं अधः स्फुरन्तं विवस्वन्तं सूर्य्यं गिरीन्द्राग्रके दृष्टवानस्मि अर्दि चित्तस्य विक्षेपे ठीति परः स्वमते नियमाभावात् भवत्येव सुप्तस्य तादृशसूर्य्यदर्शनेन चित्तविक्षेपार्थो ऽपि गम्यत एव ईक्षङ् दर्शने विजादीत्याम् ॥२४॥

अश्रिश्रवन्नात्ययिकं तमेत्य दूता यदार्थं प्रयियासयन्तः। आंचिष्ट जाताञ्जिचिषस्तदासावुत्कण्ठमानो भरतो गुरूणां ॥२५॥

अश्रि। दूताएत्य आगत्य भरतमातृकुलमित्यर्थः। आङ्पूर्व्वादिणः क्त्वाप्रत्ययस्य ल्यपि तुकि च रूपम्। यदा तं भरतमर्थं वचनमश्रिश्रवन् श्रावितवन्तः अर्थयतेऽनेनेति णिच् घञ् च श्रृणोतेर्ण्यन्ताल्लुङि चङि द्विर्व्वचनम् स्रवतिश्रृणोतीत्यभ्यासस्येत्वम्। आत्ययिकम् अत्ययो विनाशः स प्रयोजनमस्येति तदस्य प्रयोजनमिति ठञ् पिता ते म्लानस्तान्द्रष्टुमिच्छतीति आत्ययिकं वचनं तमिति गतिबुद्धीत्यादिना कर्म्मसंज्ञा श्रृणोतेः शब्दकर्म्मत्वात् अर्थमिति कर्त्तुरीप्सिततममित्यनेन प्रयियासयन्तः प्रयातुमिच्छन्तम्भरतम्प्रयोजितवन्तः सनन्ताण्णिजन्तोऽयं तदा असौ भरतोजाताञ्जिचिषः जाता अञ्जिचिषा गमनेच्छा यस्य सः अञ्चि गतौ इदितोनुम् तस्मादंचितुमिच्छतीति सन् इट् अजादेर्द्वितीयस्येति चिशब्दो द्विरुच्यते नकारस्य नन्द्रा इति प्रतिषेधः अभ्यास

कार्य्यम् अनुस्वारपरसवर्णौ अःप्रत्ययादित्यकारप्रत्ययः टाप् आं छिष्ट गतवान् तस्मादेवात्मनेपदिनो लुङ् उत्कण्ठमानः स्मरन् मठिकठिशोक इत्यस्मादात्मनेपदिनो रूपम् अनेकार्थत्वाद्धातूनाम्। गुरूणामितामस्यादीनां अधीगर्थेति कर्म्मणि षष्ठी ॥ २५ ॥

अशिश्रवन्नित्यादि। दूता एत्य आगत्य अर्थात् भरतमातृकुलं तं भरतं अत्ययरूपं अर्थं वस्तु यदा न अशिश्रवन् आवितवन्तः प्रयियासयन्तः भरतं गमनेच्छां कारयन्तः तदा असौ भरतः जाता अञ्चिचिषा गमनेच्छा यस्य तादृशः सन् गुरूणां पित्रादीनां उत्कण्ठमानः स्मरन् आंछिष्ट गतवान् अशिश्रवन्निति श्रु श्रवणे णिः प्रेरणे इति णिः णिश्रीत्यङ् धुर्द्विश्चेति द्विः खेः सन्वत् लघुनि चङ्परे इत्यादि ... खेरुकारस्य इत्वं ण्यन्तेजुडन्तोरिति णिः यलायवायाव इति आव् ज्यच्चुकुः खःअलोपः घोऽश्नोरेरिति प्रयोज्यस्य कर्त्तुः कर्म्मत्वं आत्ययिकमिति अत्ययो विनाशः विकारसंघेति त्रिकः। अर्थोऽभिधेये शब्दानां धनकारणवस्तुषु। प्रयोजने निवृत्तौ च विषये च प्रयुज्यते। केचित्तु अर्थयते अनेनेत्यर्थं वचनं आत्ययिकं अनर्थसम्बन्धीत्यर्थः अर्थमित्यत्र अमुमिति पाठे अमुं भरतं प्रयियासयन्तः आत्ययिकं राज्ञोमरणं। एत्येति ल्यादनञ इति आङ्पूर्व्वादिणः क्वाप् खस्यतनृपितीति तन् प्रयियासयन्त इति यातेः सनन्तात् णिः शतृः आंछिष्टेति अछिङ्गतौ इदित्वान्नुम् जाताञ्चिचिषःइति अञ्चेः सन इम् नाजन्तादेरादिर्द्विरिति स्यादौ नवद्रोये इति च निषेधात् आदिनकारस्य न द्वित्वं संस्थाइ इति अःकठिङ् आध्याने इष्टानवाप्तौ तद्वाप्तयेऽभिलाष उत्कण्ठेत्यन्ये। गुरूणामिति समार्थैनेत्यादिना कर्म्मणि षष्ठी ॥ २५ ॥

बन्धूनशङ्किष्ट समाकुलत्वादासेदुषः स्नेहवशादपायं। गोमायुशारङ्गगणाश्च सव्यङ्नायासिषुर्भीममरासिषुश्च ॥२६॥

बन्धू। दुःखप्रदर्शनेन अकस्माच्च पितृदूतागमनेन स्नेहवशात् चेतसि समाकुलत्वाद्भरतो बन्धूनशङ्किष्ट शङ्कितवान् उत्प्रेक्षितवानित्यर्थः शङ्कतेरात्मनेपदिनो लुङि रूपम् कीदृशान् आसेदुषः अपायं विनाशं गतवतः भाषायां सदवसेत्यादिना क्वसुः अत एकहल्मध्येत्वाभ्यासलोपौ। अस्मद्बन्धुः कश्चित् व्यसनमापन्नोऽभूदिति गच्छतस्तस्य गोमायुशारङ्गगणाः शृगालमृगगणाश्च सव्यगनुकूलत्वायासिषुः नागताः यातेर्लुङि यमरमेति सगिटौ शृगालाः प्रदक्षिणकृताः मृगाश्च सव्यमित्यर्थः। भीममुद्वेगकरमरासिषुः रसिताः रसेः परस्मैपदिनो लुङ् अतो हलादेरिति वृद्धौ रूपम् न रासेः तस्यात्मनेपदित्वात् ॥२६॥

बन्धूनित्यादि। दुःखप्रदर्शनात् अकस्मात् पितृदूतागमनाच्च स्नेहवशात् चेतसि समाकुलत्वात् गच्छन् भरतो बन्धून् अपायं विनाशं आसेदुषः प्राप्तान् अशङ्किष्ट शङ्कितवान् शकिङ् चासशङ्कयोः गच्छतस्तस्य गोमायुशारङ्गगणाः शृगालहरिणसमूहाः सव्यगनुकूलं नायासिषुः नागतवन्तः शृगालाः प्रदक्षिणं गता इत्यर्थः। यातेर्ण्यां यमरमेतोम्सनो मनुश्चिह्देरिति अन् उस् भीमं भयानकं यथा स्यात्तथा अरासिषुः शब्दं कृतवन्तः रसशब्दे हसादेः सेम इति त्रिः अनुउस्। यातके हरिणे पुंसि सारङ्गः शवले त्रिस्वि

ति इत्यादौ रभसः। ष्ठ्योतेर्क्यर्थत्वादङ्गः औणादिक इति तालव्यादिं केचिदाहुः ॥२६॥

स प्रोषिवानेत्य पुरं प्रवेक्ष्यन् शुश्राव घोषं न जनौघजन्यं। आकर्णयामास न वेदनादान्न चोपलेभे वणिजां पणायाः ॥२७॥

सप्रो। स भरतः प्रोषिवान् मातामहकुलात् प्रोषितः सन् भाषायामित्यादिना क्वसुः यजादित्वात्सम्प्रसारणन्द्विर्वचनम् वसेकाजाद्घसामिति इट् पुरमयोध्यामेत्य आगत्य प्रवेक्ष्यन् गृहमित्यर्थात् पुरम्प्रविष्टः घोषं शब्दं न शुश्राव न श्रुतवान् जनौघजन्यञ्जनसमूहेन जन्यमुत्पाद्यं तत्किमपि चलितयतीति जनेर्यत् तथा वेदध्वनीन्नाकर्णयामास न श्रुतवान् प्रातिपदिकाद्धात्वर्थ इति णिच् तदन्तात् लिडामि अपामन्त्येत्ययादेशः न चोपलेभे नोपलब्धवान् वणिजां पण्यजीविनाम्पणायान् पणलाभान् कथञ्चिद्रूपव्यवहारस्योच्छिन्नत्वात् पणन्ते इति वणिजः पणेरिजादेश्च व इत्यौणादिकः पण्यन्त इति पणाः नित्यम्पणः परिमाण इत्यप् व्यवहर्त्तव्याः। ईयन्ते प्राप्यन्ते वणिग्भिरित्ययाः लाभा एरजिति इणः कर्म्मणि अच् पणानामयाः पणायाः तान्। पणायामिति पाठान्तरं वणिजां वस्तूनि संव्यवहारविषयाणि नोपलेभे संव्यवहारकुशलाः साधव इति गुपादिषु स्तुत्यर्थपनिना साहचर्य्यात् पणेरपि तदर्थादेवायप्रत्ययः अःप्रत्ययादित्यकारः टाप् वणिजां प्रलापानिति तृतीयः पाठः वणिक्प्रसार कलहानित्यर्थः ॥ २७ ॥

सइत्यादि। स भरतः प्रोषिवान् मातामहकुले कृतप्रवासस्ततए त्यागत्य पुरमयोध्यां प्रवेक्ष्यन् प्रवेशं करिष्यन् जनसमूहजन्यं घोषं शब्दं न शुश्राव। प्रोषिवानिति प्रपूर्व्वाद्वसौऐनिवासे इत्यस्मात् क्वसुः यस्वपायोरिति जिः दित्वं वसोर्घसे काजितीम् प्रवेक्ष्यन्निति विशप्रौ प्रवेशे स्यतृ: जन्यमिति कट्टोःकभाव इत्युक्तेः कर्त्तरि घ्यण् जनौघा ञ्जातमित्यर्थः किम्वा तव्यानीयया इति ञ्यन्नात्मनेः कर्म्मणि यः वेदध्वनिं न आकर्णयामास न श्रुतवान् कर्णतक्भिदि वणिजां पणो पजीविनां पणायाः क्रयविक्रयव्यवहारान् न च उपलेभे ददर्श प ण्यव्यवहारेस्तुतौ कमच्छतेत्यादिना आयः संख्याद इति अः स्त्री त्वस्य पणायानिति पाठे पण्यते इति पणाः घञलनटोघे इत्यल् आयोलाभः इमान् व्यवहर्त्तव्यलाभानित्यर्थः वणिगापणायानि ति पाठे वणिजामापणो निषद्या तचायानित्यर्थः आपणस्तु निषद्या यामित्यमरः॥२७॥

चक्रन्दुरुच्चैर्नृपतिं समेत्य तं मातरोऽभ्यर्णमुपाग तास्ताः। पुरोहितामात्यमखाश्च योधा विवृद्धमन्युप्रति पन्नमन्याः॥२८॥

चक्रन्दः। तं भरतं गृहगतमभ्यर्णं समीपीभूतं समेत्य ढौकि त्वा मातरः कौशल्याद्याः नृपतिमुच्चैरत्यर्थं चक्रन्दुः क्रन्दित वत्यः हा स्वामिन् हा राजन् क्व गतोऽसीति उपागतश्चास्तमस्तम ञ्जसं यासान्ताः एवंविधाः युध्यन्त इति योधाः पचादित्वादच्। ते च तं समेत्य नृपतिञ्चक्रन्दुः पुरोधीयत इति पुरोहितः निष्ठा

र्धातोर्घिः । अमाशब्दः सहार्थे सह राज्ञा कार्य्येषु भवतीत्यमात्यः अमेरकृतसिचेभ्य इति निपातात् पुरोहितामात्यौ मुखम्प्रधानं येषां योधानान्ते पुरोहितामात्यमुखाः अमात्यस्याजाद्यन्तत्वेऽपि पुरोहितस्याभ्यर्हितत्वात्पूर्व्वनिपातः विवृद्धमन्युना शोकेन प्रतिपूर्णे मन्ये गलशिरे येषामिति ॥ १८ ॥

चक्रन्दुरित्यादि । तं भरतं अभ्यर्णं समीपवर्त्तिनं समेत्य प्राप्य मातरः कौशल्याद्यो नृपतिं चक्रन्दुः तमुद्दिश्य सशब्दं रुरुदुरित्यर्थः उपागतं अस्रं नेत्रजलं यासां तास्तथा अभ्यर्णमित्यभिपूर्व्वस्यार्द्दधातोः क्तान्तस्य रूपं क्षुब्धस्वान्तेत्यादिना निपातितं युध्यन्ते इति योधाः पचादित्वादच् तेऽपि तं समेत्य चक्रन्दुः पुरोऽग्रे धीयते स्थाप्यते इति पुरोहितः धाञोहिः अमाशब्दः सहार्थे सह राज्ञा कार्य्येषु भवति अमात्यः त्यचाद्यपिरेति त्यः पुरोहितामात्यौ मुखं प्रधानं येषां योधानां ते तथा ते जना योधाश्चेति वा विवृद्धेन मन्युना शोकेन प्रतिपूर्णा मन्या येषां यासां वा हाकण्ठान्तपूर्व्वेति निपात्यते पश्चाद्ग्रीवा शिरा मन्या इत्यमरः ॥ १८ ॥

दिदृक्षमाणः परितः ससीतं रामं यदा नैक्षत लक्ष्मणञ्च । रोरुद्यमानः स तदाभ्यपृच्छद्यथावदाख्यत्स च वृत्तमस्मै ॥ १९ ॥

दिदृ । स भरतो यदा ससीतं रामं लक्ष्मणञ्च परितः सर्व्वतो दिदृक्षमाणः द्रष्टुमिच्छन् ज्ञाश्रुस्मृदृशांसन इति तङ् इच्छा

चेति सूत्रः किन्त्वे छजिद्दशोरित्यम् न भवति नैचत न दृष्टवाम् तदा रोदयमानः अत्यर्थं रुदन् यङि रूपम् अभ्यपृच्छत् पृष्टवाम् ऐचताभ्यपृच्छदिति भूतसामान्यविवक्षया लङ् अन्यथा कवेः परोक्षत्वात् लिट् स्यात् अथैतस्मिन् प्रस्तावे यथावत् यादृशं वृत्तभूतन्तथावत् आख्यन् कथितवन्तः पुरोहितामात्यमुखा अस्मै भरताय। ख्यातेरस्यतीत्यादिना च्लेरङ् आतोलोपः॥२८॥

दिदृक्षमाण इत्यादि। स भरतः ससीतं रामं लक्ष्मणञ्च परितः सर्व्वतः दिदृक्षमाणः द्रष्टुमिच्छन् यदा न ऐचत तदा रोरुद्यमानो भृशं रुदन् अभ्यपृच्छत् पृष्टवान् अथानन्तरं यादृशं वृत्तं तादृशं तस्मै भरताय आख्यन् कथितवन्तः अर्थात् पुरोहितामात्यमुखा योधाश्च दिदृक्षमाण इति दृशेः सन् एर्नानिमीति गुणनिषेधः ज्ञादृशमनतुजा इति मं ईचङ्दर्शने घी रुदेर्मूचस्वेत्यादिना यङ् प्रच्छोशश्वीपे घी ग्रहस्वपाद्योरिति जिः ख्यातिर्वक्त्यस्येति ङः तादर्थ्ये चतुर्थी यदभिप्रेत्य धात्वर्थ इति चतुर्थीति परः॥२८॥

आबद्धभीमभ्रुकुटीविभङ्गः शोस्वीयमानारुणरौद्रनेत्रः। उच्चैरुपालब्ध स कैकयीञ्च शोके मुहुश्चाविरतं न्यमाङ्क्षीत्॥३०॥

आबद्ध। स भरत उच्चैर्महता ध्वनिना केकयीञ्च मुहुर्मुहुर्भूयो भूय उपालब्ध उपालब्धवान् उपाङ्पूर्व्वो लभिरुपालम्भे वर्त्तते तस्मादात्मनेपदिनो झलोझलीति सिज्लोपे धत्वजश्

त्वे रूपम् शोके च मन्यौ अविरतमजस्त्रं न्यमाङ्क्षीत् निमग्नः मस्जे र्लुङि मस्जिनशोर्झलीति नुम् तत्रापि मस्जेरन्त्यादिनियमात् नुम् संयोगादिलोपः हलन्तलक्षणा वृद्धिः हल्ग्रहणं समुदायप्रति पत्त्यर्थमित्युक्तम् कीदृशः आबद्धभीमभ्रुकुटीविभङ्गः भ्रमेश्चडुरि त्यौणादिकोडुः कुटेस्त्रीलिङ्गे भावे कृषादिभ्य इतीः तदन्तात् कृदि कारादिति ङीष् भ्रुवोः कुटी कौटिल्यं भ्रुकुटी इको ह्रस्वोऽङ्योगा लवस्येति ह्रस्वः तस्या विभङ्गो विरचनम् आबद्धः कृतः प्रय त्नेनायासप्रवृत्तेन भीमोभयानको भ्रुकुटीविभङ्गो येन यस्य वेति श्वश्वीयमाने अत्यर्थं शूयमाने अरुणे लोहिते रौद्रे भयानके नेत्रे यस्य सः श्वयतेर्यङि विभाषाश्वेरिति वा सम्प्रसारणम् तमुपाल भमाह ॥ ३० ॥

आबद्धेत्यादि। स भरतः उच्चैर्यथा स्यात्तथा मुहुर्वारं वारं के कयीं उपालभ्य निर्भर्त्सितवान् शोकेऽविरतं न्यमाङ्क्षीत् निममज्ज कीदृशः आबद्धः कृतोभयङ्करोभ्रुकुटीविभङ्गोयेन स तथा पुनः किम्भूतः श्वश्वीयमानेअत्यर्थविवृद्धे अरुणे रक्ते रौद्रे भयानके नेत्रे च यस्य स तथा भ्रुवोः कुटी कौटिल्यं वेक्स्वस्यार्थेऽसे इत्यत्र व्यव स्थितविभाषार्थो वाशब्दस्तेन सन्ध्यतिरिक्तस्थाने क्वचित् समासे ह्रस्वः स्यादिति देवीदासचक्रवर्त्तिना व्याख्यातं तेनाच पाक्षिकोभ्रु वो ह्रस्वः मनीषादित्वाद्वा टुओश्विगतिवृद्ध्योः मूत्रस्त्रेति यङ् श्वेर्णुः घोऽज्यरे उपाङ्पूर्व्वात्लभेर्गर्हायां टी तन् झसस्याञ्झसी ति सेर्लोपः टुमस्जोशशुद्धौ व्यांसिः अनिम्त्वात् भजवदेति श्रिः स्यादेः सेर्लोपः चङिति कङ् किलादिति षः नुण्रध इति नुण् श्चोर्नुरित्यनुस्वारः झपेञ्झोरिति ङः ॥ ३० ॥

नृपात्मजौ चिक्लिशतुः सशीतौ ममार राजा विधवा भवन्तः। शोच्या वयं भूरनृपा लघुत्वं कैकय्युपज्ञं बत बह्वनर्थं ॥३१॥

नृप। नृपात्मजौ रामलक्ष्मणौ ससीतौ सीतया सह चिक्लिशतुः क्लिष्टौ ममार मृतो राजा म्रियतेर्लुङ्लिङोश्चेति नियमात्तङो भावः विधवाः धवो भर्त्ता तेन विना भवन्त्यो जाताः शोच्याः शोचनीया वयम् अयशोभाजनत्वात् ऋहलोर्ण्यत् शक्या इति पाठान्तरम् शङ्कनीया वयम् एतत्कृतोऽयमप्रयोग इति भूश्चानृपा न विद्यते नृपोयस्यामिति नञोऽस्त्यर्थानामिति बहुव्रीहिः लघुत्वं राज्यप्रार्थनालक्षणङ्कैकय्युपज्ञम् कैकय्याः प्रथमतो ज्ञातम् नान्यस्य कस्यचित्पूर्व्वं ज्ञातम् उपज्ञायत इत्युपज्ञम् आतश्चोपसर्गे इति क्विधानम् कृल्लक्षणा षष्ठी कैकय्या उपज्ञेति समासः। उपज्ञोपक्रममिति नपुंसकता बत कष्टम्बह्वनर्थभङ्गदोषं क्लेशमरणाद्यनिष्टानां सम्भवात् भरतकृत एवायमप्रयोग इत्येतत्परिहरन्नाह ॥ ३१ ॥

नृपात्मजावित्यादि। सीतासहितौ नृपात्मजौ रामलक्ष्मणौ चिक्लिशतुः दुःखितौ क्लिश्युङ्उपतापे राजा ममार मृङ्प्राणत्यागे इति नियमात् पं धवो भर्त्ता तेन विहीना भवन्त्यो जाताः मातृगर्णसम्बोधो नं कैकय्युपालम्भोऽयं वयं शोच्याः अयशोभाजनत्वात् शोकार्हाः तेश्चाःशक्यार्हे इति अर्हार्थे ण्यण् इमन्तत्वात् चजोः कुगाविति सेम्कवर्णमात् न कत्वं किम्वा आवश्यकत्वविवक्षया नावश्यके इति निषेधः शक्या इति पाठे एतत्कृतोऽयं प्रमाद इति लोकैः

अस्या वितर्कणीया भूरवृषा राजमून्या व्युलं राज्यमार्जनरूपं नीचकर्म्म केकय्युपज्ञं केकय्याः सकाशात् प्रथमत उपलब्धं नान्यतः केनापि दृष्टमित्यर्थः उपज्ञायत इत्युपज्ञा क्विप्। उपज्ञोपक्रमा न्तस्य तदादित्वप्रकाशने इत्यमरवचनात् नपुंसकत्वं लिङ्गस्य लो काश्रयत्वात् बहनर्थं बहवोऽनर्था दोषा यत्र तत्तथा वत इति खेदे ॥३१॥

नैतन्मतं मत्कमिति ब्रुवाणः सग्रामणीकोऽसौ शपथा नशप्यत्। उद्राश्यमानः पितरं सरामं लुठ्यन् सशो को भुवि रोरुदावान् ॥३२॥

नैतत्। यदेतत्केकय्यनुष्ठितं मतमभिप्रायः न मत्कृतम्मत् माह मस्य ग्रामणीर्न प्रभुरिति अस्मच्छब्दात् एषां ग्रामणीरिति कन् प्रत्ययोत्तरपदयोश्चेति मपर्य्यन्तस्य मादेशः नास्मन्मतादनुष्ठि तमनयेत्यर्थः इत्येवं ब्रुवाणः सग्रहसो वज्ञवारामसौ भरतः शप थान् सम्प्रत्ययकारणवचनानि अशप्यत् कृतवान् अनेकार्थत्वा द्धातूनां शपेर्दैवादिकस्य उभयपदिनो लुङि रूपम् उद्राश्य मानः आक्रयन् वाशृशब्दे दैवादिकः अनुदात्तेत् पितरं सरा मं हा तात हा रामेति लुठ्यन् भुवि लुठन् लुटविलोडने दैवा दिकः परस्मैपदी सशोक इति श्राव्यपरिहारार्थम् रोरुदावान् अत्यर्थं रोदनं कुर्व्वन् यङन्तात् अःप्रत्ययादित्यकारः अतो लोपः यस्य हलः स्त्रियामतष्टाप् सा विद्यते यस्येति मतुप् ॥३२॥

स्वदोषं परिहरन्नाह। नैतदित्यादि। यदेतत् केकय्या कृतं

तव मत्कं मत्स्वामिकं मत्कर्तृकं मतं अहमस्य प्रभुरित्यर्थे विकार संघेत्यादिना कः इति ब्रुवाणोऽसौ भरतः सहस्रशो बहुवारान् शपथान् प्रत्ययकारणानि अशपत् उक्तवान् शपथैश्च आक्रोशे आक्रोशभाषणं धातूनामनेकार्थत्वात् शपिरत्र करोत्यर्थो वा सरामं पितरं उद्दाश्यमानः हा राम हा तातेति आक्रन्दन् ऊवा अयश्शब्दे भुवि लुठ्यन् लुटविलोडने रोरुदावान् अत्यर्थरोदन युक्तः रुदेर्य्यङन्तात् संख्याद इति अप्रत्ययः ततोवतुः हेतुमाह सशोक इति सहस्रशब्दात् सङ्ख्यैकार्थादिति चशस्॥३२॥

तं सुस्थयन्तः सचिवा नरेन्द्रं दिधक्षयन्तः समुदूह्य रारात्। अन्त्याहुतिं हावयितुं सविप्राश्चिचीषयन्तोऽध्वरपात्रजातं॥३३॥

तं सु। सचिवा अमात्याः कार्य्येषु सचन्ते समवयन्तीति सचे रिवन्नित्यौणादिक इवन् तम्भरतं सुस्थयन्तः सुस्थङ्कुर्व्वाणाः त त्करोतीति णिच् नरेन्द्रन्दशरथं समुदूह्य उदाहितवन्तः शिवि कायामारोप्य वहिरन्तर्भावितण्यर्थोऽत्र द्रष्टव्यः यजादित्वात्सम्प्र सारणम् आरात् नातिदूरे दिधक्षयन्तः दग्धुमिच्छन्तं भरतं प्रयोजितवन्तः दहेः सनि दादेर्द्धातोर्घः भषभावश्चर्त्वं प्रयोजक व्यापारे णिच् अन्ते विनाशे भवा या आहुतिः दिगादित्वाद्यत् ता मन्त्याहुतिं हावयितुमग्नौ प्रक्षेपयितुं सविप्राः ब्राह्मणैः सहिताः सचिवाश्चिचीषयन्तः चेतुन्निधातुमिच्छन्तः प्रयोजितवन्तः किन्तत् अध्वरपात्रजातं यज्ञोपयोगिपात्राणां स्रुवादीनां समूहम्॥३३॥

तमित्यादि। विप्रसहिताः सचिवाः अमात्यास्तं भरतं सुखयन्तः सुखं कुर्व्वन्तः नरेन्द्रं दशरथं समुदूढ़ः वहेरन्तर्भावितण्यर्थात् शिविकायामारोप्य उद्वाहितवन्त इत्यर्थः विप्राणां वहना नौचित्यात् वहेर्णौ प्रापणे ढौ व्यथग्रहेति जिः ग्रहस्वपाद्योरिति प्रकृतेर्जिः सुखयन्त इति लेःहत्याख्याने ञिरिति सुखशब्दात् ञिः आरात् समीपे दिधक्षयन्तोदग्धुमिच्छां कारयन्तः दहेः सनन्तात् ञिः शतृः अन्त्याहुतिं हावयितुं अग्नौ प्रक्षेपयितुं अध्वरपात्रजातं यज्ञोपयोगिस्रुवादिसमूहं चिचीषयन्तः चेतुमिच्छां कारयन्तः अन्तकाले भवोऽन्त्यः दधिकादिति ष्णः सचिः सेवा विद्यतेऽस्य सचिवः गोतृणेत्यादिना केशादित्वाद्वः सचन्ति कार्य्येषु समवयन्तीत्यर्थे सचिवा निपातनाद्वा ॥ २३ ॥

उदक्षिपन् पट्टदुकूलकेतूनवादयन् वेणुमृदङ्गकांस्यं। कम्बूंश्च तारानधमन् समन्तात्तथानयन् कुङ्कुमचन्दनानि ॥ २४ ॥

उद। पट्टदुकूलविरचितान् केतून् ध्वजानुदक्षिपन् उच्छ्रितवन्तः ये नियुक्ताः क्षिपेस्तौदादिकस्य ग्रहणम् वेणुमृदङ्गकांस्यं वंशमुरजकांस्यतालमवादयन् वादितवन्तः वदेर्ण्यन्तस्यैव प्रयोगः जातिरप्राणिनामित्येकवद्भावः न पुनस्तूर्य्याङ्गत्वात् तत्र हि प्राणिमात्तूर्य्याङ्गानां द्वन्द्वैकवद्भावः यथा मार्दङ्गिकपाणविकमिति वृतृवदिहनिकमिकषिभ्यःसः इत्यौणादिकः कंसशब्दः तदर्थायहितं कंसीयं त्रपुणा द्रव्यं प्रकृतिविकारभावे छः तस्य विकार

इति कंसीयपरशव्ययोर्यञञौ लुक्केति ज्ञस्य लुक् यञ् च प्रत्ययः कम्बून् शङ्खान् तारान् उच्चैस्तरध्वनीन् अधमन् शब्दितवन्तः पाघ्रेत्यादिना धमादेशः तथा कुङ्कुमचन्दनानि आनयन् आनीतवन्तः सर्व्वत्र लङि रूपं अन्त्येष्टिं दर्शयन्नाह॥२४॥

उदक्षिपन्नित्यादि। अर्थात् तत्र नियुक्तास्ते जनाः पट्टदुकूलरचितान् केतून् ध्वजान् उदक्षिपन् उक्षिप्तवन्तः क्षिपस्तौदादिकः। कार्पासं बादरं प्रोक्तं दुकूलाद्यञ्च वाल्कलं। कौषेयं कृमिजञ्चापि राङ्कवं मृगरोमजमित्यमरमाला। वेणुमृदङ्गकांस्यं अवादयन् वादितवन्तः अप्राणिजातित्वात् समाहार इति कात्यायनः तूर्य्याङ्गत्वात् इति वासवताः। सर्व्वो द्वन्द्वः समाहार इति प्राञ्चः। स्वमते इतरेतरयोगे च समाहारे च वो द्विधेति सामान्येन द्विविधो द्वन्द्व उक्तः तत्र क्वचिदितरेतरः क्वचित् समाहारः अभिधानात् बोद्धव्यः यदुक्तं कृत्तद्धितसमासानामभिधानं नियामकमिति कम्बून् शङ्खान् तारान् उच्चतरध्वनीन् अधमन् शब्दायितवन्तः स्थादानपाघ्रेति धीधम तथा कुङ्कुमचन्दनानि आनयन् सर्व्वत्र घी॥२४॥

श्रोत्राक्षिनासावदनं सरुक्मं कृत्वा जिने प्राक्शिरसं निधाय। सन्चित्य पात्राणि यथाविधानमृत्विग्जुहाव ज्वलितं चिताग्निं॥२५॥

श्रोत्रा॥ अजिने कृष्णसारचर्म्मणि प्राक् पूर्व्वं शिरोमूर्द्धा यस्येति तं प्राक्शिरसं शवन्निधाय स्थापयित्वा पश्चात् श्रोत्राक्षिनासावदनं प्राण्यङ्गत्वादेकवद्भावः इत्युवदीत्यादिसूत्र

ञानकमरं चयतेरात्वेति प्रकृतेराकारे मामेत्यौणादिकं रूपम् सरुक्मं ससुवर्णं कृत्वा सञ्चित्य विन्यस्य अङ्गप्रत्यङ्गेषु पात्राणि स्रुगादीनि यथाविधानं यादृशं विधानमुक्तं गृह्यशास्त्रे। ऋत्विग्याजकः ऋतौ यजतीति ऋत्विग्दधृगित्यादिना निपातितः ज्वलितश्चिताग्निं चयनं चितं तदर्थमग्निं जुहाव जुहोतिस्म ॥ २५ ॥

श्रोत्रेत्यादि। प्राक् पूर्व्वस्यां दिशि शिरो यस्य तादृशं शरीरं अजिने कृष्णसारचर्म्मणि निधाय संस्थाप्य श्रोत्राक्षिनासावदनं सरुक्मं सुवर्णयुक्तं कृत्वा यथाविधानं विधानमनतिक्रम्य पात्राणि स्रुवादीनि सञ्चित्य अङ्गेषु निधाय ऋत्विक् याजकः ज्वलितं चिताग्निं जुहाव एतेनाग्न्येष्टिरुक्ता ऋतौ यजतीति ऋत्विक् चासुचिति क्विप् चङिति कङ् श्रोत्रेत्यादिप्राण्यङ्गत्वात् द्वन्द्वैकत्वं क्लीवत्वञ्च नित्यं भजते इति परः। स्वमतेऽत्र वेणुमृदङ्गकांस्यमितिवत् समाहारो द्वन्द्व इतरेतरोऽपि दुर्निवारः। यथा ग्रीवाकुचिललाटेषु नित्यं स्वेदः प्रशस्यते। गण्डे चुम्बं ललाटाक्षिकचोरुभगमूर्द्धसु इत्यादि दर्शनात् परमतं हेयं ॥२५॥

कृतेषु पिण्डोदकसञ्चयेषु हित्वाभिषेकं प्रकृतं प्रजाभिः। प्रत्यानिनीषुर्विनयेन रामं प्रायादरण्यं भरतः सपौरः ॥ २६ ॥

कृते। पिण्डोदकदानास्थिसञ्चयेष्वनुष्ठितेषु प्रजाभिः प्रकृतं प्रस्तुतमभिषेकमादिकर्म्मणि क्तः हित्वा त्यक्त्वा जहातेश्च क्त्वीति

च्छिरादेशः रामम्प्रत्यानिनीषुः प्रत्यानेतुमिच्छुः विनयेन प्रसादनया न भयादरण्यं वनम्आयात् गतवान् भरतः सह पौरैः अयोध्याभवैर्जनैः मयैकेन प्रसाद्यमानः कदाचिन्नागमिष्यतीति॥ २६॥

कृतेष्वित्यादि। पिण्डोदकदानाख्यिसम्प्रयनेषु कृतेषु पश्चात् प्रजाभिः प्रकृतं प्रस्तुतमभिषेकं हित्वा विनयेन रामं प्रत्यानिनीषुः प्रत्यानेतुमिच्छुर्भरतः पौरैः सह अरण्यं प्रायात् जगाम याते र्थ्यो रूपं प्रकृतमिति आरम्भे क्तः हित्वेति त्यक्त्वेत्यर्थः आत्मनोर्विनयज्ञापनार्थं मयैकेन प्रसाद्यमानः कदाचित् नागच्छेदित्याशङ्कया पौरैःसह गमनं पिण्डोदकपदेन दाने लक्षणा सम्प्रयोऽथिसम्प्रयनं पिण्डोदकानां सम्प्रया इति केचित्॥ २६॥

शीघ्रायमाणैः ककुभोऽश्नुवानैर्जनैरपन्थानमुपेत्य कृष्टैः। शोकाद्भूषैरपि भूस्तकाशाञ्चकार नागेन्द्ररथाश्वमिश्रैः॥२७॥

शीघ्रा। जनैर्हेतुभूतैर्भूश्चकाशाञ्चकार शोभतेस्म कर्त्तुः क्रियाफलयोगेऽपि नात्मनेपदम् आम्प्रत्ययवदित्यत्र पूर्व्वग्रहणानुवृत्तेः चकासेश्च परस्मैपदित्वादिति विधिनियमौ स्थितौ शीघ्रायमाणैः अशीघ्रैः शीघ्रैर्भवद्भिर्झटिति गच्छद्भिरित्यर्थः भृशादित्वात् क्यङ् ङित्वात्तङ् ककुभोऽश्नुवानैः दिशोव्याप्नुवद्भिः अश्नोतेः सौवादिकस्य आत्मनेपदिनो रूपम्। अपंथानमुपेत्य कृष्टैः वकुत्वादमार्गमपि गत्वागतैः ऋक्पुरित्यादिना समासान्तः प्राप्तोनञस्त

स्पृहयादिति प्रतिषिद्धः सन् पथोविभाषेति विकल्पितः शोकाद्धेतो रभूषैरनलंकारैरपि चकाशाञ्चकार भूः भूमिः भूषेति गुरोश्च हल् इत्यकारप्रत्ययः चकास्त्यदीनामित्यस्मात् कास्यनेकाज् ग्रहणमनुप्रयोगार्थमित्याम् नागेन्द्ररथाश्वमिति द्वन्द्वे एकवद्भावः अल्पाच्तरस्य न पूर्व्वनिपातः बहुष्वनियम इति वचनात् तेन सेनाङ्गत्वात् कृतकवद्भावेन मिश्रैर्युक्तैः पूर्व्वसदृशेत्यादिना तृतीया समासः॥ ३७॥

शीघ्रायमाणैरित्यादि। शोकाद्भूषारहितैरपि जनैर्भूश्चकाशाञ्चकार चकास्त्यदीनां विजादिद्वयेत्यादिनाम् भस्तुम्याम: भूषेति सेम्बात् सरोरिति अः किम्भूतैः शीघ्रायमाणैः अशीघ्रैः शीघ्रैर्भवद्भिः कार्य्यवशात् द्रुतं गच्छद्भिरित्यर्थः भृशादेरभूतार्थे इति च्युः घीऽज्यरे इति घः क्तिवान्तं ककुभोदिशः अश्नुवानैर्व्याप्नुवद्भिः अशूङ्व्याप्तिसंहत्योः वक्तुत्वात् अपन्यानमपि व्याप्य सङ्गैर्गतैः विकल्पितमप्रत्ययान्तं नागेन्द्रा हस्तिश्रेष्ठा रथा अश्वाश्चेति परमते सेनाङ्गत्वात् समाहारद्वन्द्व एव स्यमते इतरेतरद्वन्द्वोऽपि लभ्यते मिश्रैर्युक्तैः॥ ३७॥

उच्चिक्यिरे पुष्पफलं वनानि सस्नुः पितृन् पिप्रियुरापगासु। आरेमुरित्वा पुलिनान्यशङ्कं च्छायां समाश्रित्य विशश्रमुश्च॥ ३८॥

उच्चि। ते जनाः गच्छन्तः पुष्पफलं पुष्पाणि फलानि चेति जातिरप्राणिनामित्येकवद्भावः उच्चिक्यिरे उच्चितवन्तः भिन्नात्मक

कर्त्तुः क्रियाफलयोगात् विभाषा चेरिति धातोः कुत्वमेरनेकाच इति यणादेशः उचिच्यिर इति पाठान्तरं युक्तम् वनानीति हेतु त्वेनाकथितत्वात्कर्म्म वनानि विघट्टयन्तः फलानि जगृहुरित्यर्थः ततः सस्नुः स्नातवन्तः स्नातेर्लिटि उसपदान्तादिपरत्वम् पितॄन् पिप्रियुः उदकाञ्जलिना तर्पितवन्तः प्रीणातेर्लिटि इयङा देशः आपगासु नदीषु एतत्कृत्वा पुलिनानि सैकतानि इत्वा आरेटुः आरटिताः आरेमुरिति पाठान्तरं शोकापनोदनार्थं कियन्तमपि कालमारमन्ति स्म व्याङ्परिभ्योरम इति परस्मैपदम् अशङ्कं विस्रब्धं च्छायां समाश्रित्य विशश्रमुः विश्रान्ताः॥३८॥

उचिच्चिर इत्यादि। ते जना वनानि पुष्पाणि फलानि च उचिच्चिरे चिञ्चयने ठी याञ्चार्थदुहचिप्रच्छीति द्विकर्म्मकत्वं चेःकि र्व्वेति किः अुध्वोरिति यत्वं वनानि विघट्टयन्तः पुष्पफलं जगृहु रित्यर्थः परमते अप्राणिजातित्वात् समाहारद्वन्द्वः स्वमतं त्व दङ्गकांस्वमित्यचोक्तं आपगासु नदीषु सस्नुः स्नातवन्तः पितॄन् पिप्रियुः तर्पितवन्तः प्रीञ्तर्पणे अुध्वोरितीयादेशः पुलिनानि सैकतानि इत्वा गत्वा आरेमुः शोकापनोदार्थं क्रीडन्ति स्म चे पमित्यादिना पं आरेटुरिति पाठे शोकात् शब्दं चक्रुरित्यर्थः। रटपरिभाषणे तॄफलेति अत एत्वं खिलोपश्च अशङ्कं निःशङ्कं यथा स्यात्तथा छायां समाश्रित्य विशश्रमुः॥३८॥

संप्राप्य तीरं तमसापगाया गङ्गाम्बुसम्पर्क्कविशुद्धिभाजः। विगाहितुं यामुनमम्बु पुण्यं ययुर्निरुद्धश्रमवृत्तयस्ते॥३९॥

संप्रा। तमसापगायाः तमसाख्याया आपगायाः नद्याः अत्यविचमितमिनमिरभिजभितपिपतिजनिपणिमहिभ्योऽसच् च स्याः स्मरणात्पापं ताम्यति या तमसा तरसा इति पाठान्तरं तत्र तरसा वेगेन आपगाया अर्थात्तमसाया नद्या गङ्गाम्बुसम्पर्कात् विशुद्धिं पवित्रतां भजते या तस्यास्तीरं कूलं सम्प्राप्य गत्वा ते जना निरुद्धश्रमवृत्तयः ययुः गताः गङ्गेति गम्‌गम्योरिति यादिको गन् विगाहितुं विगाहिष्यामह इति कृत्वा यामुनमम्बु यमुनाया इदं यमुनासम्बन्धि जलं पुण्यम्पुण्यहेतुत्वात् पुण्यमुक्तमादा॥ ३९॥

संप्राप्येत्यादि। ते जनास्तमसापगायास्तमसानामनद्यास्तीरं कूलं संप्राप्य निरुद्धश्रमवृत्तयः सन्तः यामुनं यमुनासम्बन्धि पुण्यं पावनं अम्बु जलं विगाहितुं ययुः तरसेति पाठे वेगेनेत्यर्थः यमुनाशब्दात् विकारसंघेत्यादिना इदमर्थेण्णः श्रित्तेश्रिरिति श्रिः तमसापगायाः कीदृश्याः गङ्गाजलसम्पर्कात् अतिशयितशुद्धिं भजते या तस्याः ढाङ्गजसहवहेति विण्॥ ३९॥

ईयुर्भरद्वाजमुनेर्निकेतं यस्मिन् विशश्राम समेत्य रामः। च्युताशनायः फलवद्विभूत्या व्यस्यन्नुदन्यां शिशिरैः पयोभिः॥ ४०॥

ईयुः। भरद्वाजमुनेर्निकेतं आश्रममीयुः गताः इणोयणिति यत्वम् अभ्यासस्य दीर्घइणःकितीति दीर्घत्वं यस्मिन्निकेते रामो विशश्राम विश्रान्तः समेत्य मिलित्वा तमीयुर्जना इति योज्यम् फलवद्विभूत्या फलवतां वृक्षाणां समृद्ध्या हेतुभूतया च्युताश

नायोऽपगतबुभुक्षः अशनायेत्यादिना निपातितः व्यस्यन् उदन्यां वारयन् असेर्देवादिकस्य रूपम् उदन्यां पिपासां शिशिरैः शीतलैः पयोभिः ॥ ४० ॥

ईयुरित्यादि। ते भरद्वाजमुनेर्निकेतमीयुर्गता इत्यर्थः इण गतौ ठौ यिणोऽनभ्यासस्येति यादेशः खेःकितिर्धं इति दीर्घः य स्मिन् निकेते रामः समेत्य संगत्य विशश्राम विश्रान्तः कीदृशः स फलवतां वृक्षाणां विभूत्या सम्पदा च्युताशनायः व्यपगतबुभुक्षः अशनशब्दात् कोम्ध्यादिति क्यः धनोदकाशन इत्यादिना अन्ता देशः ततः संख्याद इत्यः स्त्रीलञ्च च्युता अशनाया यस्य स तथा शिशिरैः शीतलैः पयोभिर्जलैरुदन्यां पिपासां व्यस्यन् अपनयन् असुदर्थे शतृः उदकस्य उनङ् पानार्थे पूर्व्ववत् पयोभिरिति पीरूपयपानि चासुषिति अस् ॥ ४० ॥

वाचंयमान् स्थण्डिलशायिनश्च युयुक्षमाणाननिशं मुमुक्षून्। अध्यापयन्तं विनयात् प्रणेमुः पद्गा भरद्वाजमुनिं सशिष्यं ॥४१॥

वाचं। ते भरद्वाजमुनिं सशिष्यं शिष्यैः सह वर्त्तमानम्प्रणेमुः प्रणमन्तिस्म विनयात् विनयेन अतएव पद्गाः पदातयः पादाभ्यां गच्छन्तीति अन्येष्वपि दृश्यत इति डः हिमकाषिहतिषु चेति चकारस्य अनुक्तसमुच्चयार्थत्वात् गमोत्तरपदे पदादेशः प दिति योगविभागादा कीदृशम् अध्यापयन्तम्पाठयन्तम् कान्

वाचंयमान् मौनव्रतान् वाचियमो व्रत इति खच् वाचंयमपुरन्द रौचेति निपातनात्पूर्व्वपदस्य अमन्तता स्थण्डिलशायिनः भूशा यिनः. स्थण्डिलाच्छयितरि व्रत इति णिनिः युयुक्षमाणान् योगमु मिच्छतः योगाभ्यासमिच्छानित्यर्थः अनिशमविच्छेदेन मुमुक्षून्मोक्षा भिलाषिण इत्यर्थः अतएव योगाभ्यासमिच्छून्॥ ४१ ॥

वाचंयमानित्यादि। ते जनाः सश्रियं भरद्वाजमुनिं प्रणेमुः नमौ शब्दनत्योः तृफलेति अतएत्वं खिलोपश्च प्राप्नोति इति णत्वं मा दिलात् विनयात् विनयं विधाय यवर्थे पञ्चमी हेतौ वा कीदृशाः पङ्काः एतेन यानस्था अपि ये तेऽपि विनयात् पङ्गाः पङ्गां गच्छ न्तीति हनजनादिति डः पादसमानार्थोऽयं पञ्चच्छः अध्यापय न्तं पाठयन्तं क्रीजीङोऽजेतौङ आद्दीत्रीरीत्यादिना पन् कानि त्याह वाचंयमान् मौनव्रतिनः तृभृदृहजीत्यादिना आवन्तवाचा शब्दात् यमः खः खित्यव्याजेति मन् खस्य परे तु वाक्शब्दोपपदेन साधयन्ति स्थण्डिलशायिनः तृणाच्छादितभूमिशायिनः ग्रहादि त्वाणिन् व्रतेणिन्निति परः युयुक्षमाणान् योक्तुमिच्छून् योगाभिला षिण इत्यर्थः युज्योङ्समाधौ सन् शानः शानेऽतोमन् अनिशं निरन्तरं मुमुक्षून् मोक्षाभिलाषिणः मुच्लृपञ्जौमोक्षे सन् सन्भि क्षाशंसउः इभृजुषश्लिषिति शासेः क्यप् शासुङिति इत् क्विआदि ति षः॥४१॥

आतिथ्यमेभ्यः परिनिर्व्विवप्सोः कल्पद्रुमा योगब लेन फेलुः। धामप्रथिम्नो स्रदिमान्वितानि वासांसि च द्राघिमवन्त्युदूहुः॥४२॥

आति। अतिथ्यर्थमातिथ्यमन्नपानादि अतिथेरर्थः एभ्यो भरतादिजनेभ्य इति सम्प्रदाने चतुर्थी परिनिर्व्विवप्सो निर्व्वप्तुमिच्छो र्दातुमिच्छोरित्यर्थः निपूर्वो वपिर्दाने वर्त्तते धामप्रथिम्नः धाम्ना तेजसा प्रथिमा पृथुत्वं यस्य तेजसोवह्निर्निर्गतत्वात् शरीरस्य पृथुत्वं जायते तस्य भरद्वाजमुनेर्योगबलेन समाधिबलेन युज्यमाधावित्यस्य रूपम् कल्पद्रुमाः फेलुः फलिताः भक्ष्यान्नपानादिकमित्यर्थः तॄफलभजत्रपश्चेत्येत्वमभ्यासलोपश्च वासांसि च वस्त्राणि उद्रूढः उदवहन्निस्म यजादित्वात्सम्प्रसारणं म्रदिमान्वितानि मृदुत्वमुपगतानि द्राघिमवन्ति दैर्घ्ययुक्तानि पृथुमृदुदीर्घशब्देभ्यस्तस्य भाव इत्यर्थे पृथ्वादिभ्य इमनिच् पृथुमृदुशब्दयो ऋतोह्नादेरिति रादेशः दीर्घशब्दस्य प्रियस्थिरेत्यादिना द्राघादेशः पञ्चाञ्चतुप् ॥ ४२ ॥

आतिथ्यमित्यादि। आतिथ्यं अतिथ्यर्थमन्नपादिकं एभ्यो भरतादिभ्यः परिनिर्व्वप्सोर्निर्व्वप्तुं दातुमिच्छोर्मुनेर्योगबलेन समाधिबलेन कल्पवृक्षाः फेलुः अर्थात् अन्नपानादिकं तॄफलेति अतएत्वं खिलोपश्च विकारसंघेत्यादिना तादर्थ्ये अतिथेः ण्यः निःपूर्व्वो वपिर्दाने वर्त्तते युज्योऽस्समाधौ घञि चजोःकगाविति जस्य गत्वं तस्य मुनेर्धामप्रथिम्नो हेतोस्तेजोवाहुल्यात् ते कल्पद्रुमा वासांसि उद्रूढः उदवहन्निस्म चकारः समुच्चये वहेञ्प्रापणे व्यक्तपश्चेति जिः कीदृशानि म्रदिमान्वितानि मृदुत्वेन युक्तानि द्राघिमा दैर्घ्यं विद्यते येषान्तानि गुणादिमनभावे इति पृथुमृदुदीर्घशब्देभ्य इमन् पृथुमृदुकृशेति पृथुमृदुशब्दयोः ऋकारस्य रः वाढान्तिकेति दीर्घस्य द्राघादेशः ओमंस्यड्डिदिति डित्त्वे टेर्लोपः

द्राघिमशब्दात् मोऽन्मतुपादित्यस्यार्थे वतुः तेजसां प्रथिमा यस्य इति मुनिविशेषणं केचिदाहुः॥४२॥

आज्ञां प्रतीषुर्विनयादुपास्थुर्जगुः सरागं ननृतुः सहावं। सविभ्रमं नेमुरुदारमूचुस्तिलोत्तमाद्या वनिताश्च तस्मिन्॥४३॥

आज्ञां। तस्मिंस्तपोवने तिलोत्तमाद्या दिव्यस्त्रिय आगता आज्ञामादेशं मुनेः प्रतीषुः प्रतीष्टवत्यः चेटीभवत्य इत्यर्थः प्रतिपूर्व्व इषिर्ग्रहणे वर्त्तते तस्य लिटि रूपम् विनयादुपास्थुः उपस्थिताः पादप्रक्षालनादिदाने उपस्थान कृतवत्यः उपपूर्व्वात्तिष्ठते र्लुङि सिच् गातिस्थेति सिचोलुक् सिजभ्यस्तविदिभ्यश्चेति झेर्जुस् उस्यपदान्तादिति पररूपम् जगुः सरागं सरङ्गीतवत्यः ननृतुः सहावं सशृङ्गारचेष्टं नर्तितवत्यः सविभ्रमन्नेमुः सविलासप्रणताः उदारमूचुः अग्राम्यमुक्तवत्यः॥४३॥

आज्ञामित्यादि। धामप्रथिम्नः किमित्याह तस्मिन् वने तिलोत्तमाद्या वनिता अप्सरस आगत्य मुनेराज्ञां प्रतीषुर्गृहीतवत्यः प्रतिपूर्व्व इषिर्ग्रहणे अां रूपं विनयात् उपास्थुः भरतादीनां उपासनां चक्रुः उपपूर्व्वात्तिष्ठतेर्ज्ञा रूपं भूस्थापिवेति सेर्लुक अनुस्त्रिद्धेरिति अन् उस् उस्येपीत्यालोपः सरागं मालवादिरागयुक्तं यथास्यात्तथा जगुः गीतवत्यः गैगाने ठी सहावं शृङ्गारचेष्टायुक्तं ननृतुः नृत्यञ्चक्रुः हावाः क्रियाः शृङ्गारभावजा इत्यमरः।

सविभ्रमं नेमुः प्रणामं चक्रुः। विभ्रमस्त्वरया काले भूषास्थानविप र्य्ययः। चित्तवृत्त्यनवस्थानं शृङ्गाराद्विभ्रमोऽथवा। विलास इत्यन्ये उदारमग्राम्यमूचुः वनिताः। जनितात्यर्थानुरागायाश्च योषितीति कोषः चकारः पूर्व्वापेक्षया॥ ४३॥

वस्त्रान्नपानं शयनञ्च नाना कृत्वावकाशे रुचिसं प्रक्लृप्तं। तान् प्रीतिमानाह मुनिस्ततः स्म निवध्वमाध्वं पिवतात्त शेध्वं॥४४॥

वस्त्रा। ततोवनितोपस्थानानन्तरमवकाशे प्रदेशे यथाभि मते वस्त्रान्नपानं सर्व्वोद्वन्द्वोविभाषैकवद्भवतीत्येकवद्भावः शयन मित्यधिकरणे ल्युट् नाना कृत्वा पृथक् कृत्वा रुचिसम्प्रक्लृप्तं यस्य यावद्भिरुचितन्तत्तथैव सम्पादितम् कपोरोलः प्रीतिमान्मुनि स्तान् भरतादीनाह स्म उक्तवान् किमाह निवध्वं परिधत्त वस्त्रा णि वस आच्छादन इत्यस्य विधौ लोट् झलाञ्जशझशीति सकार स्य दकारः आध्वं उपविशत आसेः पूर्व्ववत् दादेशः अत्त खादत अन्नादिकं अदभक्षणे इत्यस्मात् लोट् पानादिकम्पिवत पिवतेः पाघ्रादिसूत्रेण पिवादेशः शेध्वम् स्वपत शयने सर्व्वत्र विधौ लोट्॥ ४४॥

वस्त्रान्नपानमित्यादि। ततोवनितोपस्थानानन्तरं धामप्रथिम्नो र्हेतोर्व्वा अवकाशे यथायोग्यस्थाने वस्त्रं अन्नं पानं शयनञ्च रुचि संप्रक्लृप्तं यस्य यथारुचिस्तथैव सम्पादितं अतएव नानाविधं कृत्वा प्रीतिमान् मुनिस्तान् भरतादीन् आहस्म उवाच किन्तदित्याह निवध्वं वस्त्राणि परिधत्त वसङ्कलस्तौ स्तृतिराच्छादनं झपझसे

रिति यस्य इत्वं निर्द्दकारपाठे धेस्लोपोवेति पाक्षिकः सलोपः सर्व्वेच विधौ गो आध्वं उपविशत निलासङ्उपवेशे पूर्व्ववत् पिवत पयःप्रभृतिकमर्थात् पापाने स्वादानेति पिवादेशकरणात्र गुणः किम्वा पिवादेशोऽयमदन्तः तेन पुगन्तलघूपधस्येत्यस्य न विषयः लोपो ऽतोदेचोरित्यकारलोपः अत्त भक्षयत अद्लौभक्षणे शेध्वं शयनं कुरुत शीङ्ोरेणुः वस्तमिति वसेस्त्वासुषिति चः अन्नमिति गीक इति सूत्रे अन्नव्यवस्थनेति ज्ञापकात् न जग्धादेशः अदोज ग्धिरनोदमे इति परसूत्रं पानमिति कर्म्मणि आधारे वा अनट् शयनमित्याधारेऽनट् ॥ ४४॥

ते भुक्तवन्तः सुसुखं वसित्वा वासांस्युषित्वा रजनीं प्रभाते। द्रुतं समध्वा रथवाजिनागैर्म्मन्दाकिनीं रम्य वनां समीयुः॥ ४५ ॥

ते भुक्त। ते भरतादयः सुसुखमिति क्रियाविशेषणम् भुक्तवन्तः सन्तो वासांसि वसित्वा परिधाय रजनीमुषित्वा रजनीं रात्रीं वसतिक्षुधोरिट् कालाध्वनोरिति द्वितीया द्रुतं शीघ्रं प्रभाते मन्दाकिनीन्नदीं समीयुः सम्भूय गताः समध्वा अविच्छिन्नाध्वानः सङ्गता अध्वन इति प्रादिसमासः उपसर्गादध्वन इति समासा न्तष्टच् रथवाजीति द्वन्द्वकवद्भावः तेन सहिता नागा इति शाक पार्थिवादित्वात्समासः अन्यथा सेनाङ्गत्वात्समुदायस्यैकवद्भावः स्यात् रम्यवनां रमणीयकाननां रमणीयजलाम् वा॥ ४५॥

तद्दत्यादि। सुसुखं यथास्यात्तथा भुक्तवन्तः कृतभोजना भर

तारयो वासांसि वस्त्राणि वसित्वा परिधाय रजनीं उषित्वा स्थित्वा प्रभाते समध्वा अध्वानं सङ्गताः सन्तः रथवाजिनागैर्वृतं श्रीमं रम्यवनां मन्दाकिनीं समीयुः सङ्गतवन्तः इणच्छ्यां रूपं मन्दाकिनी चित्रकूटवर्त्मनि नदीविशेषोनर्मदेति प्रसिद्धा गङ्गामाचे मन्दाकिनीति केचित् रम्याणि वनानि यत्र वनं काननं नीरयोरिति विश्वः वसित्वेति वसङ्लस्तृतावित्यस्य रूपं उषित्वेति ऐवसोनिवासे सुधवसपूजार्थाश्चेति इम् यहस्वपाद्योरिति जिः रजनीमिति दे शाध्वकालेति कर्मत्वं समध्वा इति गेरध्वन इत्यः न्वोर्लोपोतीति इति नस्य लोपः यथोर्लोप इत्यकारलोपः रथाश्च वाजिनोऽश्वाश्च नागा हस्तिनश्चेतीतरेतरद्वन्द्वः परे तु सेनाङ्गानां बहुत्वे समाहार इति रथश्च वाजी च नागश्चेत्येकवचनेन विग्रहं वदन्ति समाहारविधेरनित्यत्वमित्यन्ये, आदौ रथवाजिशब्दाभ्यां समाहारस्ततो रथवाजिना सहिता नागाः रथवाजिनागाः शाकपार्थिवादित्वादिति केचित् ॥ ४५ ॥

वैखानसेभ्यः श्रुतरामवार्त्तास्ततोविशिञ्ज्ञानपतत्त्रिसंघं। अभ्रंलिहाग्रं रविमार्गभङ्गमानंहिरेऽद्रिं प्रति चित्रकूटं ॥ ४६ ॥

वखा। ततो मन्दाकिनीगमनानन्तरं वैखानसेभ्यस्तृतीया अमिभ्यः चित्रकूटे रामोस्तीति श्रुतरामवार्त्ताः चित्रकूटनामानमद्रिं पर्व्वतं प्रति लक्षणेत्थम्भूताख्यानेत्यादिना कर्म्मप्रवचनीयसंज्ञा कर्म्मप्रवचनीययुक्त इति द्वितीया तं लक्ष्मीकृत्य आनं

ष्ठिरे जग्मुः अंहतेर्लिटि द्विर्वचनं हलादिशेषः अतआदेरिति दीर्घः तस्मान्नुट् द्विहल इति नुट् विशिखानपतत्त्रिसंघं कूजत्पत्त्रिगणं अभ्रंलिहाग्रं अभ्रस्पृक्शिखरम् वहाभ्रेलिह इति खश् अरुर्द्विषदित्यादिना मुम् रविमार्गभङ्गं उच्चैस्तरत्वात् रवेर्मार्गे भङ्गो यस्मिन्नद्राविति ॥ ४६ ॥

वैखानसेभ्य इत्यादि। ततो मन्दाकिनीगमनानन्तरं वैखानसेभ्यो वानप्रस्थेभ्यः श्रुता रामवार्त्ता यैस्ताहशा भरतादयश्चित्रकूटमद्रिं प्रति लक्षीकृत्य आनंहिरे गतवन्तः अहिङ्गतौ ठी इदित्वान्नुम् द्वित्वं स्यान्तादादायृदाद्यश्चोरिति खेरान् यो नुरित्यनुस्वारः हाशस इति हस्य शसत्वात् धिक्समयेति प्रतियोगे द्वितीया। वैखानसो वनेवासी वानप्रस्थस्य तापस इति वैजयन्ती अद्रिं किंभूतं विशिखानः पतत्त्रिणां पक्षिणां संघः समूहो यत्र एताहशं शिञ्जिकिङ्कस्फुटध्वनौ अभ्रंलिहाग्रं अभ्रस्पृक्शिखरं परन्तपवत् खः वाकुत्वाद्गुणाभावः उच्चैस्तरत्वाद्रवेर्मार्गभङ्गो वर्त्मविघातो यस्मिन् ॥ ४६ ॥

द्रष्टोर्णुवानान् ककुभो बलौघान् वितत्य शार्ङ्गं कवचं पिनह्य। तस्थौ सिसंग्रामयिषुः शितेषुः सौमित्रिरस्त्रिभुवमुज्जिहानः ॥ ४७ ॥

द्रष्टो। बलौघान् दृष्ट्वा सौमित्रिस्तस्थौ स्थितः अथ्थावस्थापर्वाः स्वय इति खः शेषः कीदृशः ककुभोदिश ऊर्णुवानान् आच्छादयतः ऊर्णोतेरारादिकशोभयपदिनः शानचि उवङ्

देशे च रूपम् शार्ङ्गं शृङ्गस्य विकारं धनुर्वितत्यं आरोपितगुणं कृत्वा वाव्यपीत्यनुनासिकलोपः कवचं पिनह्य बद्धा नह्बन्धन इत्यस्य ल्यपि अपिशब्दाकारलोपस्तु। वष्टि भागुरिरल्लोप मवाप्योरुपसर्गयोः। धाञ्कञोस्तनिनस्योस्य वञ्जलतेन ॐनकि रिति। सिसंग्रामयिषुः संग्रामयितुमिच्छुः संग्रामयुद्ध इति चौरादिकोणिच् तदन्तस्य सनि प्रथमस्यैकाचोद्विर्व्वचनम् श्रिते षुः तीच्णशरः अच्चिणी च भ्रुवौ च अच्चिभ्रुवम् अचतुरेत्यत्र निपातितः उज्जिहानः ऊर्ध्वंनयन् ओहाङ्गतावित्यस्य जुहोत्यादिकस्य भृञामितीत्त्वम्॥४७॥

दृष्ट्वेत्यादि। ककुभोदिश ऊर्णुवानान् आच्छादयतोबलौघान् सैन्यसमूहान् दृष्ट्वा सौमित्रिर्लक्ष्मणः कवचं पिनह्य बद्धा शृङ्गविकारं शार्ङ्गं धनुर्वितत्य सज्यं कृत्वा आकर्षणेन विस्तार्य्य वा अच्चिभ्रुवमुज्जिहान उत्चिपन् सिसंग्रामयिषुः युद्धेच्छुः सन् तस्थौ णवातो डीः किम्भूतः श्रितस्तोक्ष्ण इषुः शरोयस्य स तथा शोयनिशाने च्छाशोर्व्वेति ङिः ऊर्णुवानानिति ऊर्णुञ्आच्छादने शानः श्नुभ्रोरित्युव वितत्येति तनदञ्विस्तृतौ वनतनाद्यनिमामिति नस्य लोपः ल्यपतन्यपिति पिनह्येति अपिपूर्व्वोणह्बन्धे वातोऽवाप्योरित्यपेरलुक् सिसंग्रामयिषुरिति संग्रामकृतकयुद्धे सन् उः अच्चिभ्रुवमिति अच्चिणी च भ्रुवौ च अच्चिभ्रुवमिति निपातनात् उज्जिहान इति ओहाङ्लिगतौ शानः क्त्रादीरेद्विः पृभ्रादेरिति द्धित्वः॥४७॥

शुक्लोत्तरासङ्गभृतोविशस्त्वान् पादैः शनैरापततः समन्यून्। औद्दिष्ट तान् वीतविरुद्धबुद्धीन् विवन्दिषून् दाशरथिः स्ववर्ग्यान्॥४८॥

शुक्लो। दाशरथिस्तान् स्ववर्ग्यान् स्ववर्गे भवान् अशङ्कीयत् स्वाविति यत् आत्मीया अपि कदाचित् दुष्टबुद्धयो भवन्तीत्या ह वीतविरुद्धबुद्धीन् औहिष्ट ऊहितवान् ऊहतेरात्मनेपदिनो लुङि आट् वृद्धिः तदेवाविरुद्धबुद्धित्वन्दर्शयन्नाह शुक्लोत्तराष ङ्गभृतः शुक्लो ऽथ उत्तरासङ्ग उत्तरीयं तं विभ्रतीति क्विप् विश स्तान् निरायुधान् पादैरापतत आगच्छतो मुक्तवाहनत्वात् शनैर्न त्वरया समन्यून् सकष्टशोकान् आगतशोकान् वा विवन्दिषून् वन्दितुमिच्छून् ॥ ४८ ॥

शुक्लेत्यादि। दाशरथिस्तान् स्ववर्ग्यान् वीतविरुद्धबुद्धीन् विगत दुष्टमतीन् औहिष्ट ज्ञातवान् ऊहङ् वितर्के वर्गात् भवार्थे ण्यः। कदाचिदात्मीया अपि दुष्टचेतसः स्युरतउक्तं वीतेति इण् क्तः वीतविरुद्धबुद्धित्वं कुतो ज्ञातमित्याह शुक्लेति शुक्लोऽथ उत्तरासङ्ग उत्तरीयं तं विभ्रति इति क्विप् युद्धे शुक्लोत्तरासङ्गो निषिद्धः विश स्तान् निरायुधान् शनैर्मन्दं यथास्यात्तथा पादैरापतत आग च्छतस्त्यक्तवाहनत्वात् समन्यून् सशोकान् विवन्दिषून् वन्दितु मिच्छून् ॥ ४८ ॥

समूलकाषं चकषूरुदन्तो रामान्तिकं बृंहितमन्युवेगाः। आवेदयन्तः क्षितिपालमुच्चैःकारं मृतं रामवियोगशोकात् ॥ ४९ ॥

समू। ते रामान्तिकं रामसमीपम्प्राप्य चकषुः पिष्टवन्तः समूलकाषं समूलङ्कषित्वा भूमेरधोभागमुत्खात्य निमूलसमूल

योः कष इति कषेर्णमुल् कषादिषु यथाविध्यनुप्रयोगः रुदन्तः रोदनं कुर्व्वन्तो दृंहितमन्युवेगा विरूढशोकवेगा दृहिदृहावित्य स्य रूपम् रामवियोगशोकात् कारणात् चितिपालन्दशरथमुच्चैः कारं कृत्वा मृतं निधनं गतं आवेदयन्तः कथयन्तः अव्यये यथा भिप्रेताख्यान इति कृञो णमुल् एतद्यथाभिप्रेताख्यानमिति नी चैराख्यातुमभिप्रेतत्वात् उच्चैरावेदयन्ति ॥ ४८ ॥

समूलकाषमित्यादि। ते रुदन्तो रामान्तिकं रामसमीपदेशं स मूलकाषं यथास्यात्तथा चकषुः पिष्टवन्तः भूमौ स्वशरीराघा तात् समूलस्य साधोभागस्य रामसमीपदेशस्य काषः पेषणं यस्मा दिति कषणक्रियाविशेषणं काषोघञन्तः समूलघातवत् णमुल्वा। केचित्तु समूलं भूमेरधोभागमपि कषित्वा पिष्ट्वा पुनः पिष्टवन्त इति व्याख्याय णमन्तस्य पूर्व्वकालत्वमाहुः अन्येतु णमन्तस्यात्र पृथगर्थाभावमाहुः तेन समूलकाषञ्चकषुः समूलं चकषुरित्यर्थः। कषवधे वा रूपं समूलमिति साकल्येऽव्ययीभावः मूलसहितमित्य र्थोवा किम्भूतास्ते दृंहितमन्युवेगा विरूढशोकवेगा दृहिदृह्यौ रामवियोगहेतुकात् शोकान्मृतं चितिपालं उच्चैःकृत्वा आवेदय न्तो ज्ञापयन्तः उच्चैःकारमिति अव्ययात् कृञोऽनिष्टकथने णम् कारं विश्वं किम्वा उच्चैर्यथास्यात्तथावेदयन्तः किम्भूतं चितिपालं कारं रामवियोगे प्राणवियोगकारित्वेनैव विश्वलं कृकङ्विज्ञाने इत्यस्मात् कभावेऽमी इति वचनात् कर्त्तरि घञ् ॥ ४९ ॥

चिरं रुदित्वा करुणं सशब्दं गोत्राभिधायं सरितं समेत्य। मध्येजलाद्राघवलक्ष्मणाभ्यां प्रत्तं जलं शुञ्ज लमन्तिकेऽपां ॥ ५० ॥

चिरं। चिरं महान्तं कालं करुणं यमन्यु यशब्दं प्रतिकृत्य रु दित्वा रुदोव्युपधाद्धलादेरिति कित्वे विकल्पिते रुदविदेत्यादि ना कित्वम् सरितं समेत्य नदीं सम्भूय गत्वा मध्येजलात् जलस्य मध्यात् तस्माद्वा उत्थाय अवतीर्य्य ल्यब्लोपे पञ्चमी पारेमध्ये षष्ठ्यावेत्यव्ययीभावः अपञ्चम्यादिति प्रतिषेधात् अत्र भवति नाव्य यीभावादिति लुक्प्रतिषेधस्य राघवलक्ष्मणाभ्यां अपामन्तिके स मीपे जलं प्रत्तम् दत्तं अचउपसर्गात्तः गोत्राभिधायं नामाभि धायं द्वितीयायाञ्चेति णमुल् द्व्यञ्जलमिति अञ्जलिपरिच्छिन्नं जलमञ्जली द्वौ विगृह्य तद्धितार्थे समासः द्वित्रिभ्यामञ्जलेरि ति टच् ताभ्याम्प्रत्येकमञ्जलिप्रदानात् द्वावञ्जली प्रमाणमस्ये त्यस्मिन्वाक्ये प्रमाणप्रत्ययस्य प्रमाणे लुक् द्विगोर्नित्यमिति लुक् ततः समासान्तो न प्राप्नोति अतद्धितलुकीत्यधिकारात्॥ ५०॥

चिरमित्यादि। चिरकालं करुणं सशोकं सफूत्कारं रुदित्वा क्रन्दित्वा सरितं नदीं समेत्य सम्भूय गत्वा मध्ये अवतीर्य्य जल मध्यादाकृष्य वा रामलक्ष्मणाभ्यां अपां अन्तिके जलसमीपे तटे द्व्यञ्जलं अञ्जलिद्वयपरिच्छिन्नं जलं गोत्राभिधायं यथास्यात्तथा प्रत्तं प्रदत्तं डुदाञ्दाने क्तः गयचस्तवेति पत्ते तादेशः मध्येजला दिति मध्ये इत्यव्ययं हस्तेपाणौप्राध्वमित्यादौ तद्ग्रहणात् जलस्य मध्ये मध्येजलमित्यव्ययीभावः यवर्थे पञ्चमी अन्यारभ्येत्यादि ना सामान्यतोयवर्थे पञ्चम्युक्ता तेन सर्व्वस्मात् कारकाकार कात् यवर्थे पञ्चमी दुर्निवारा परैस्तु कर्म्माधाराभ्यां यवर्थे पञ्च मी भूरिप्रयोगार्थमुक्ता क्वचिदन्यत्रापोति नैरुक्तत्वात् वोपदेवेना पि सामान्यतोयवर्थे पञ्चमीमुक्ता आनन्दादीश्वरः शैत्यादासन्नां

दीयतेऽलकामित्यत्र शैलमारुह्य आसने उपविश्य इत्यर्थ इति व्याख्यातं तेन कर्म्माधाराभ्यां यवर्थे पञ्चम्या भूरिप्रयोगो ज्ञापितः वातकर्म्मोऽतोग्याद्‌ इति पीवर्ज्जनात्‌ न मः मध्ये समेत्य जलादुत्थाय जलं प्रत्तमिति केचित्‌ द्व्यञ्जलमिति द्वयोरञ्जल्योःसमाहार इति द्विचिभ्याम ञ्जलेर इत्यप्रत्ययः यचोर्लोपइतीकारलोपः तत्परिच्छिन्नत्वादभेदोपचारात्‌ जलमपि द्व्यञ्जलमुक्तं ताभ्यामेकैकाञ्जलिदानादञ्जलिद्वयं जलं दत्तमित्यर्थः केचित्तु अतद्धितार्थे द्विगौ द्विचिभ्यामञ्जलेर इत्युक्ता द्वावञ्जली प्रमाणमस्येति वाक्यं दूषयन्ति प्रमाणार्थस्य तद्धितवाच्यत्वात्‌ गोत्राभिधायमिति गोत्रस्य नाम्नोऽभिधायोऽभिधानं यत्र दानक्रियाविशेषणं अभिपूर्व्वात्‌ धाञोघञि यन्ञिणदिति यन्‌ किम्वा गोत्रमभिधाय गोत्राभिधायं द्वितीयान्तात्‌ धातोस्णमभिधानात्‌ केचित्तु आत्मीयैर्धृताभ्यां नीताभ्यां रामलक्ष्मणाभ्यां अपामन्तिके चिरं रुदित्वा तदनु मध्ये मध्यभागसमीपे सरितं समेत्य नाभिपर्य्यन्तं जलं गत्वेत्यर्थः जलं प्रत्तं कीदृशं जलं जलात्‌ अदेःकर्म्मणि क्विप्‌ जलस्य जडस्य अदनीयं भावे क्विपि जडत्य अदनीयं भोजनं यस्मादिति वा लोकान्तरं प्राप्तस्यापि दशरथस्य जडत्वं त्यक्तरामत्वात्‌ प्रेतत्वादा मनीषादित्वात्‌ डस्य पाचिकं लत्वं गोत्राभिधायमित्यस्य रुदित्वेत्यनेन वा सम्बन्ध इत्याहुः ॥५०॥

अरण्ययाने सुकरे पिता मां प्रायुङ्क्त राज्ये वत दुष्करे त्वां। मागाः शुचं वीर भरं वहामुमाभाषि रामेण वचः कनीयान्‌ ॥५१॥

अर। अरण्याय यानं अरण्ययानं तस्मिन् सुकरे सुखसाध्ये पिता मां प्रायुङ्क्त नियुक्तवान् युजेरौधादिकस्य लङि रूपम् कर्त्रभिप्राये प्रोपाभ्यां युजेरित्यात्मनेपदं राज्ये दुष्करे दुःखसाध्ये त्वां प्रायुङ्क्त एवञ्च सति हे वीर शुचं शोकम्मागाः माकार्षीरित्यर्थः इणोगा लुङि गातिस्थेति सिचोलुक् वत इति खेदे किन्तु भरममुं पितुर्नियोगं भृभरण इत्यस्मात् ऋदोरप् वह सम्पादय विधौ लोट् एवं वचः रामेण कनीयान् अनुजो भ्राता भरतः आभाषि भाषितः कर्मणि लुङ् ब्रुवीत्यर्थग्रहणात् द्विकर्मकता अल्पशब्दादीयसुनि युवाल्पयोरित्यादिना कनादेशः॥ ५१॥

अरण्ययानइत्यादि। रामेण कनीयान् भरतोवच आभाषि कथितः ब्रुवेरर्थग्रहणात् याञ्चार्थदुहचीत्यनेन द्विकर्मकत्वं गौणे याचादय इति गौणकर्मोक्तं अल्पशब्दाद्गुणादेष्ठेयस इति ईयसुः युवाल्पोकन्वेति कनादेशः किं तदच इत्याह पिता सुकरे सुखसाध्ये अरण्ययाने वनगमने मां प्रायुङ्क्त दुष्करे दुःखसाध्ये राज्ये राजकर्मणि त्वां प्रायुङ्क्त नियुक्तवान् युजेर्थ्रा रुधादित्वात् अण् युजिरउदुच इति मं नणोर्नोऽणाविति नादेशः च्छिङिति कङ् ऋपेत्सीः ईषद्दुःसोःखलिति ह्नः खल् विकारसंघेत्यादिना राज्ञः कर्मार्थे ज्ञः मन्वर्ज्जानित्यादिना भावकर्मयवर्ज्जनात् न्वोर्लोपौ ताविति राज्ञोनस्य लोपः वत खेदे एवं सति हे वीर शुचं शोकं मागाः न लभस्व इणोगाव्यां भूस्थापिबेति सेर्लुक् अमुं भरं पितृनियोगरूपं त्वं वह सम्पादय विधौ गी भरोऽतिशय भारयोरिति कोषः॥ ५१॥

कृती श्रुती वृद्धमतेषु धीमांस्त्वं पैतृकं चेद्वचनं न कुर्य्याः। विच्छिद्यमानेऽपि कुले परस्य पुंसः कथं स्यादिह पुत्रकाम्या ॥ ५२ ॥

कृती। वृद्धानां पण्डितानां मतेषु श्रुतानि कृतानि चानुष्ठितानि येनेति श्राद्धमनेनेत्यधिकृत्य इष्टादिभ्यश्चेति इनिः क्तस्येन्विषयस्येति कर्म्मणि सप्तमी स्वमते भावक्तान्तादस्त्यर्थे इन् स त्वमेवंविधः धीमान् पैतृकं पितुरागतं पितुर्य्यच्चेति चकाराद्वतष्ठञि ईसुसुक्तां तात्कः चेद्यदि वचनं न कुर्य्याः मध्यमपुरुषैकवचने लिङि रूपम् तदा विच्छिद्यमाने कुले वंशे परस्यापि अन्यस्यापि पुंसः अपिशब्दोभिन्नक्रमः कथं स्यादिह लोके पुत्रकाम्या आत्मनः पुत्रेच्छा नैवेत्यर्थः पुत्रशब्दात्काम्यचेति काम्यच् तदन्तादप्रत्ययः टाप् ॥ ५२ ॥

कृतीत्यादि। कृती त्वं पैतृकं पितुरागतं चेद्यदि न कुर्य्याः न करिष्यसि तदा कुले वंशे विच्छिद्यमानेऽपि परस्य उत्तरकालीनस्य श्रेष्ठस्य अन्यस्य वा पुंसः कथं इह लोके पुत्रकाम्या आत्मनः पुत्रेच्छा स्यात् भवन्तं दृष्ट्वा अग्रिमस्य लोकस्य वचनाकरणेन पुत्रेष्वश्रद्धाप्रसङ्गात् त्वं कथम्भूतः वृद्धमतेषु पण्डितमतेषु कृती श्रुती च वृद्धमतानि कृतानि येन स वृद्धमतेषु कृती वृद्धमतानि श्रुतानि येन स वृद्धमतेषु श्रुती क्तेनाढे इति कर्म्मणि सप्तमी क्तेनाढेइति ज्ञापकात् क्तान्तात् कर्त्तरीन्प्रत्ययोबोध्यः किम्वा कृतं करणं अनुष्ठानं श्रुतं श्रवणं कृश्रुभ्यां भावे क्तः ततोऽस्त्यर्थे नैकाजादितीन् वृद्धमतेष्विति विषयसप्तमी धीमान् प्रशस्तबुद्धियुक्तः पैतृकमिति पितृशब्दादागतार्थे ढघेकादिति कण् कुर्य्या इति भव्ये वा फलहेत्वोरिति ष्णी कुरुलोपोव्ये इत्युपोलोपः पुत्रकाम्येति त्वेःकाम्यक् स्वेच्छायामिति काम्यक् संख्यादः ॥ ५२ ॥

अस्माकमुक्तं बहु मन्यसे चेद्यदीशिषे त्वं न मयि स्थिते च। जिह्रेष्यतिष्ठन् यदि तातवाक्ये जहीहि शङ्कां व्रज शाधि पृथ्वीं॥ ५२॥

अस्मा। अस्माकमुक्तं अस्मत्सम्बन्धिवचनं यदि बहु मन्यसे आद्रियसे पितृतुल्यो भ्राता अस्थानुमतः कथमेवं न कुर्य्यामिति यदि च मयि स्थिते नेशिषे न प्रभुत्वङ्करोषि प्रभुस्त्वमहं त्वदाज्ञाकर इति ईशेराद्दादिकस्य ईशःस ईतीडागमः गुरुवचनमनतिक्रमणीयं विशेषतस्तातवाक्यं तस्मिन्नतिष्ठन् वचनमकुर्व्वाणः यदि जिह्रेषि लज्जसे ह्री दिर्व्वचनं एतस्मिंस्त्वियाह जहीहि शङ्कां त्यज विकल्पम् व्रज गच्छ अयोध्यां शाधि पालय पृथ्वीं जहातेश्चेति इत्वे विकल्पिते ईहल्यघोरितीत्वम् शासेः शाद्धाविति शाभावः तस्याभीयत्वेनासिद्धत्वात् झल्भ्यो हेर्द्धिः॥ ५२॥

अस्माकमित्यादि। अस्माकमुक्तं वचनं चेद्यदि बहु मन्यसे आद्रियसे यदि वा मयिस्थिते त्वं न ईशिषे प्रभुत्वं न करोषि तातस्य वाक्ये अतिष्ठन् पितृवचनमकुर्व्वाणो यदि जिह्रेषि लज्जसे तदा पृथ्वीं शाधि पालय एवंसति मम पितुस्त्व वचनं कृतंस्यात् अतो व्रज गच्छ अयोध्यां शङ्कां स्वायशोभयं जहीहि त्यज अस्माकमिति त्वभाव क्तेति कर्त्तरि षष्ठी सम्बन्धे इत्यन्ये गौरवे बहुत्वमभिधानात् अहमपि तव पितृतुल्य इति बहुत्वेन बोध्यते उक्तमिति भावे क्तः मन्योऽङ्बोधे ईशलङ्ऐश्वर्य्ये सध्वोरस्येमिति इम् ह्रीलिलज्जे ओहाक्त्यागे विधौ गौ आद्योरित्यादिना ङो शासुङ्गासने तज्झेधिशाधीति शाधि॥ ५२॥

वृद्धौरसीं राज्यधुरां प्रवोढुं कथं कनीयानहमुत्सहेय। मा मां प्रयुंक्थाः कुलकीर्त्तिलोपे प्राह स्म रामं भरतोऽपि धर्म्यं॥ ५४॥

वृद्धौ। भरतः प्राह धूर्व्वहनशीला धूर्नयनशीलाद्इत्यर्थः अनेकार्थत्वाद्धातूनां भ्राजभासेति क्विप् राल्लोप इति वलोपः राज्यस्य सप्ताङ्गस्य धूर्धात्री प्रकृतिरिति विग्रहः ऋक्पूरित्यकारप्रत्ययःपरवल्लिङ्गमिति धूरिति स्त्रीलिङ्गम् ततष्टाप् कीदृशीं वृद्धौरसीं वृद्धोज्येष्ठः औरसः पुत्रोयस्याः उरसा निर्म्मित इति छन्दसो निर्म्मित इत्यनुवृत्तौ उरसोऽण्चेत्यण् तां तिष्ठति रामे प्रवोढुं कथमुत्सहेय कनीयान् सन् नैवेत्यर्थः शकधृषेत्यादिना वहेः सहावुपपदे तुमुन् गर्हायां लडपिजात्वोरित्यनुवृत्तौ विभाषाकथमि लिङ्चेति लिङ् सहेरनुदात्तेत्त्वात् सीयुट् इटोत् लिङः सलोपोनन्त्यस्य अतोमा मां प्रयुंक्थाः मा नियोजय माङि लुङ् झलोझलीति सिचोलोपः कुलकीर्त्तिलोपे लोपयतीति लोपः पचाद्यच् रघुवंशस्य या कीर्त्तिः तस्या लोप इति समासः पूर्वैरनाचरितत्वात् एवञ्च धर्म्यं धर्म्मादनपेतं भरतोऽपि प्राह स्म उक्तवान् पुनश्चाह॥ ५४॥

वृद्धौरसामित्यादि। रामस्य धर्म्यवचनानन्तरं भरतोऽपि धर्म्यं धर्म्मादनपेतं वचो रामं प्राह स्म प्रोवाच विकारसंघेत्यादिना अनपेतार्थे धर्म्मात् यः किं प्राह स्म इत्याह कनीयानहं अनुजोऽहं राज्यधुरां प्रवोढुं कथं उत्सहेय उत्साहं करिष्यामि कथमाखीचवेति पचे स्त्री राज्ञोधूः राजधुरा धुरोऽनक्षस्यादिति अः

स्त्रियामतश्चाप्। धूश्च स्यात् भारचिन्तयोरिति कोषः। कीदृशीं दृष्टो ज्येष्ठ औरसः पुत्रो यस्यां तां उरसा निर्म्मित इति ढघेकादि निष्पन्नः ज्येष्ठपुत्रसम्बन्धिनीं राज्यधुरामित्यर्थः वहेस्तुमि सहव होदोढोत्योत्वं अतएव कुलकीर्त्तिलोपे धूर्व्वहे मां मा प्रयुंक्ष्वा न नियोजय लोपयतीति लोपः पचादित्वादच् यद्वा लोपो नाशः युजेर्माटीवेति टौ युजिरउद्गच इति मं झसस्ताज्झसीति सेर्लुक् मायोगेऽम्निषेधः ५४ ॥

ऊर्ज्जस्वलं हस्तितुरङ्गमेतदमूनि रत्नानि च राजभाञ्जि। राजन्यकं चैतदहं क्षितीन्द्रस्त्वयि स्थिते स्यामिति शान्तमेतत् ॥५५॥

ऊर्ज। एतद्धस्तितुरङ्गं सेनाङ्गत्वादेकवद्भावः ऊर्जस्वलं बलवत् ऊर्जनमूर्क् सम्पदादित्वात् क्विप् सा विद्यते यस्येति-ज्योत्स्नातमिस्रेत्यादिना वलच् असुगागमश्च अमूनि च रत्नानि राजभाञ्जि राजगृह्याणि एतच्च राजन्यकं क्षत्रियसमूहः क्षितीन्द्रो राजा अहं त्वयि स्थिते स्यामिति भवामीति शान्तमेतत् अलीकमेतत् स्यामिति निमन्त्रणे नियोगकरणे लिङ् ॥५५॥

ऊर्ज्जस्वलमित्यादि। एतदूर्ज्जस्वलं बलवद्धस्तितुरङ्गं अमूनि राजयोग्यानि रत्नानि एतच्च राजन्यकं क्षत्रियसमूहः एवं सर्व्वं निवेद्यात्मानं निराकरोति त्वयि स्थिते अहं क्षितीन्द्रः स्यां भवेयं इत्येतत् वचनं शान्तं अलीकं अनुचितमित्यर्थः अस्तेर्निमन्त्रणे नियोगकरणे प्रार्थने वा स्त्री ऊर्ज्जकजीवने बले चासुमिति अस्य ऊर्ज्जो विद्यतेऽस्य इति गोतृणमेधेत्यादिना रजआदित्वाद्वलः

हस्तिनश्च तुरङ्गाश्च इति समाहारद्वन्द्वः राजन्यशब्दात् विका रथं घत्यादिना संघार्थे कण् ॥ ५५ ॥

इति निगदितवन्तं राघवस्तं जगाद व्रज भरत गृहीत्वा पादुके त्वं मदीये। च्युतनिखिलविशङ्कः पूज्यमानो जनौघैः सकलभुवनराज्यं कारयास्मन्मतेन ॥ ५६ ॥

इतिभट्टिकाव्ये प्रकीर्णकाण्डे श्रीरामप्रवासोनाम तृतीयः सर्गः ॥

इति। इति एवं निगदितवन्तं उक्तवन्तं तं भरतं राघवोरामो जगाद उक्तवान् किमित्याह हे भरत मदीये पादुके उपानहौ गृहीत्वा त्वं व्रज गच्छ विधौ लोट् अस्मद्युष्मदादित्वे त्यदादीनिचेति वृद्धिसंज्ञायां तस्येदमर्थे वृद्धाच्छः प्रत्ययोत्तरपदयोश्चेति मदादेशः ततश्च पूज्यमानोजनौघैर्जनसमूहैः च्युतनिखिल विशङ्कः अपगताशेषविकल्पः सकलभुवनराज्यं सर्व्वत्र भूमंडले राज्यङ्कारय अनुष्ठापय पादुके इति योज्यं अस्मन्मतेन अस्माकमभिप्रायेण अत्र मदादेशो न भवति अस्मदोवहुवचनान्तस्य विवक्षितत्वात् तत्र ह्येकवचन इति वर्त्तते ननु कथं मदीय इत्यत्र मदादेशः बहुवचनान्तत्वादिति विरोधः पादुके रामस्यैव तर्ह्यस्मन्मतेन इत्यत्रापि एकवचनं • आवयोरामलक्ष्मणयोर्मतेनेति षष्ठीसमासेन दोषः ॥ ५६ ॥

इति भट्टिकाव्य टीकायाञ्जयमङ्गलायाम्प्रकीर्णकाण्डे रामप्रवासो नाम तृतीयः सर्गः।

इतीत्यादि। इत्येवं निगदितवन्तं भरतं राघवोरामोजगाद किं जगादेत्याह हे भरत मदीये पादुके गृहीत्वा त्वं व्रज गच्छ

अयोध्यामित्यर्थात् विधौ मो विकारसंज्ञेति इदमर्थे ईयः युष्म इस्मदोस्वाहावित्यादिनास्मदोमदादेशः च्युतनिखिलविशङ्कः अपगताशेषविशङ्कः जनौघैर्जनसमूहैः पूज्यमानस्त्वं सकलभुवन राज्यं अस्मन्मतेन कारय पादुके इत्यर्थात् किम्वा अस्मन्मतेन प्रयोज्यकर्त्रा राज्यं कारय घोऽञौञेरिति प्रयोज्यकर्त्तुः पाक्षिक कर्मत्वं अत्र साधनहेत्विति तृतीया अस्मन्मतमेव राज्यं करोतु त्वत्क्रियमाणरक्षणेनेतिभावः किम्वा रामोराज्यमकारयदिति वत् स्वार्थे ञिः चुर्भ्योञिरित्यत्र योगविभागात् किम्वा हे अस्मन्मते अस्मत्सदृशबुद्धे राज्यं न कारय न घातय शत्रुभिरित्यर्थः शीघ्रं गत्वा राज्यं रक्षेति भावः कञगिच्हिंसे इत्यस्मात् ञिः प्रेरणे आव योरामलक्ष्मणयोरिव मतिर्यस्य तस्य सम्बोधनं एतेन राज्यरक्ष णे राममतितुल्यमतित्वं दर्शितं किम्वा अस्मन्मतेन राज्यं कारय ज्ञापय लोकानित्यर्थात् स्वयं अहं राज्यं न करोमि किन्तु रामाज्ञया करोमीति पादुकाग्रहणविनयेन लोकान् ज्ञापय इति भावः कङ्विज्ञाने इत्यस्मात् प्रेरणे ञिः राज्ञोभावः कर्म वा राज्यं अस्माकं मतं अस्मन्मतं तेन सीतालक्ष्मणसहितत्वेन वहुत्व विवक्षया न मदादेशः॥५६॥

इति भरतसेनकृतायां मुग्धबोधिन्यां प्रकीर्णकाण्डे रामप्रवासो नाम तृतीयः सर्गः।

निवृत्ते भरते धीमानत्रेरामस्तपोवनं। प्रपेदे पूजितस्तस्मिन् दण्डकारण्यमीयिवान्॥१॥

निवृत्तइत्यादि। धीमान् बुद्धिमान् अत्र स्थिते मयि कदाचिद्भरतः पुनरेष्यतीत्येवम्बुद्धिमान्रामः अत्रेर्महर्षेस्तपोवनं प्रपेदे

गतः तस्मिंश्च तपोवने अर्घ्यपाद्यादिभिः पूजितः दण्डकोनाम ऋषिर्भार्गवकन्यामहरत् तच्छापात्पांशुवर्षेणाक्रान्तः सबन्धुराष्ट्र विनाशोयस्मिन् स्थाने तत्तोपलक्षितं अरण्यमभूत् तदीयिवान् गतवान् उपेयिवानित्यत्र उपसर्गस्यातन्त्रत्वात्केवलादपीष्टः क्वसुः ॥ १ ॥

निवृत्तेइत्यादि। भरते निवृत्ते सति रामोऽत्रेर्महर्षेस्तपोवनं प्रपेदे गतवान् तत्र वने मुनिभिः पूजितः सन् दण्डकारण्यमीयिवान् गतः इणः क्वसुः वसोर्धसेकाजितीम् खेःकिति र्घः यिणोऽस्यणो दण्डकनाम्नः कस्यचिद्राज्ञोऽपराधेन ब्रह्मशापात् तद्देशे अरण्योत्पत्त्या दण्डकारण्यमिति प्रसिद्धिः ॥ १ ॥

अटाट्यमानोऽरण्यानीं ससीतः सहलक्ष्मणः। बला द्बुभुक्षुणोत्क्षिप्य जह्रे भीमेन रक्षसा॥ २ ॥

अटा। महदरण्यमरण्यानी इन्द्रवरुणेत्यादिना हिमारण्ययोर्महत्त्वे ङीषानुकौ तां अटाट्यमानः अत्यर्थमटन् रामः सूचिसूत्रीत्यादिना यङ् ससीतः सहलक्ष्मणः वोपसर्ज्जनस्येति विकल्पेन सभावः बलात् बलवत्तया जह्रे हृतः गृहीत इत्यर्थः कर्म्मणि लिट् उत्क्षिप्य उत्थाप्य हस्ताभ्यां केनापि रक्षसा वैश्रवणशापात् तुम्बुरुनाम्ना गन्धर्व्वेण राक्षसीभूतेन विराधाख्येन बुभुक्षुणा भोक्तुमिच्छुना भीमेन भयानकेन भियः षुक् इत्यौणादिकपुंगभावपक्षे रूपम् ॥ २ ॥

अटाट्यमानइत्यादि। बुभुक्षुणा भोक्तुमिच्छुना भीमेन भयानकेन रक्षसा राक्षसेन उत्क्षिप्य हस्ताभ्यामुत्थाप्य रामोजह्रे गृहीत

इत्यर्थः कर्मणि ठी किम्भूतः सीतया लक्ष्मणेन च सहितो रामः अरण्यानीं महारण्यं अटाट्यमानः पुनःपुनरतिशयेन वा अटन् गच्छन् सूत्रसूचेति यङ् केचित्तु गत्यर्थाद्लुपेति नियमात् अत्रापि वक्रताविवक्षेत्याहुः तन्मते पथोऽभावात् वृक्षसंयोगेन वक्रं गच्छन्नित्यर्थः महदरण्यं अरण्यानी मारीसखीत्यादिना निपातः सहःसोवेति सहशब्दस्य विकल्पेन सादेशः ॥ २ ॥

अवाक्शिरसमुत्पादं कृतान्तेनापि दुर्द्दमं। भंक्त्वा भुजौ विराधाख्यं तं तौ भुवि निचख्नतुः ॥ ३ ॥

अवाक्। तं विराधाख्यं राक्षसं कृतान्तेनापि यमेनापि दुर्द्दमं दुःखेन दम्यत इति खल् तौ रामलक्ष्मणौ भुवि निचख्नतुर्निखातवन्तौ कीदृशम् अवाक्शिरसं अधोमस्तकं अवाक् शिरो यस्येति ऊर्द्ध्वम्पादौ यस्येति उत्पादम् भुजौ भंक्त्वा मोटयित्वा जान्तनशांविभाषेत्यनुनासिकलोपाभावपक्षे रूपम् ॥ ३ ॥

अवाक्शिरसमित्यादि। तौ रामलक्ष्मणौ तं विराधाख्यं राक्षसं भुजौ भंक्त्वा भुवि निचख्नतुः निखातवन्तौ हनगमित्युङ्लोपः किम्भूतं अवाक्शिरसं अधोमस्तकं ऊर्द्ध्वपादं ऊर्द्ध्वौपादावस्येति बहुब्रीहिः कृतान्तेन यमेनापि दुर्द्दमं दुःखेन दमनीयं ईषद्दुःसारिति खल् भंक्त्वेति भञ्जोऽनिम् इति विभाषितकित्त्वात् पक्षे नलोपाभावः ॥ ३ ॥

आंहिषातां रघुव्याघ्रौ शरभङ्गाश्रमं ततः। अध्या सितं श्रिया ब्राह्म्या शरण्यं शरणैषिणां ॥ ४ ॥

आंहि। ततोविराधवधानन्तरं रघुव्याघ्रौ शरभङ्गनाम्नो मुनेराश्रमं आंहिषातां गतवन्तौ अंहेर्लुङि रूपं अध्यासितं आश्रयीकृतं श्रिया लक्ष्म्या ब्राह्म्या ब्रह्मसम्बन्धिन्या ब्रह्मण इयमित्यण् ब्राह्मोजाताविति निपातनात् टिलोपः टिड्ढाणञित्यादिना ङीप् शरणे अवस्थाने साधु अनुकूलं शरण्यं तत्र साधुरिति यत् शरणैषिणां शरणन्त्राणमेषितुं शीलं येषाम् ॥ ४ ॥

आंहिषातामित्यादि। ततोविराधवधानन्तरं रघुव्याघ्रौ रघुवंशश्रेष्ठौ शरभङ्गनाम्नोमुनेराश्रमं आंहिषातां अहिगतौ टौ ब्राह्म्या ब्रह्मसम्बन्धिन्या श्रिया लक्ष्म्या अध्यासितं आश्रयीकृतं ब्रह्मणो देवस्य विप्रस्य तपसोवा इयमिति ष्णः शरणं त्राणं एषितुं शीलं येषां तेषां शरण्यं शरणेऽवस्थाने त्राणे वा साधु अनुकूलं विकारसंघेति साध्वर्थे यः शरणं वधरक्षित्रोः शरणं रक्षणे गृहे इति विश्वः ॥ ४ ॥

पुरो रामस्य जुहवाञ्चकार ज्वलने वपुः। शरभङ्गः प्रदिश्यारात् सुतीक्ष्णमुनिकेतनं ॥ ५ ॥

पुरो। शरभङ्गो रामस्य पुरः अग्रतः वपुः शरीरं ज्वलने अग्नौ जुहवाञ्चकार कुटिलात्तस्य भीह्रीभृहुवामिति श्राम् आमि

शुभावे दिव्यंवचनम् किं कस्येत्याह प्रदिश्य कथयित्वा किं आरात्स मीपे सुतीक्ष्णनाम्नो मुने: केतनं आश्रमम् तत्र वासमुपकल्पये ति तव किमर्थमत्रावस्थानमिति चेदाह ॥ ५ ॥

पुरइत्यादि। शरभङ्ग आरात् समीपे सुतीक्ष्णनाम्नो मुने: के तनं आश्रमं प्रदिश्य तत्र वासं कल्पयेति कथयित्वा रामस्य पुरो ऽयतः ज्वलनेऽग्नौ वपुः शरीरं जुहवाञ्चकार हुतवान् पशाम्वा भीष्टीति पशाम् शिलाद्रले क्कादीरेदिः भस्कृन्नामः प्रक्षेपमात्र स्य धात्वर्थस्य विवक्षितत्वात् ज्वलनइत्यस्य होमलभ्यत्वात् वैयर्थ्यं न वाच्यं ॥ ५ ॥

यूयं समैष्यथेत्यस्मिन्नासिष्महि वयं वने। दृष्टास्थ स्वस्ति वोयामः स्वपुण्यविजितां गतिं ॥ ६ ॥

यूयम्। अपि नाम यूयं समैष्यथ आगमिष्यथ आङ्पूर्व्व इण् आगमने वर्त्तते एत्येधत्यूट्स्विति वृद्धिः इत्यस्मात्कारणात् अस्मिन्वने वयमासिष्महि स्थिताः आसेर्लुङि रूपम् अस्मदोद्वयो श्चेति चकारस्यानुक्तसमुच्चयत्वादेकत्वे वहुवचनम् अस्मदागम ने किन्ते फलमिति चेदाह दृष्टास्थ अधुना दृष्टा भवथ अस्ते र्मध्यमपुरुषवहुवचने श्नसोरल्लोप इत्यकारलोपः। स्वस्ति कल्याणं वः युष्मभ्यम् नमःस्वस्तीत्यादिना चतुर्थी वहुवचनस्य वस्नौ स्वपुण्येन विजितां लब्धां गतिञ्जन्म यामः व्रजामः राम रूपेण विष्णुरवतीर्णः तं दृष्ट्वा यास्याम इत्यत्र वयं स्थिता इति ॥ ६ ॥

यूयमित्यादि। न केवलं सुतीक्ष्णमुनिनिकेतनं प्रविश्य एतदपि प्रविश्येति योज्यं यूयं समेष्यथ समागमिष्यथ इतिहेतोरस्मिन् वने वयमासिष्महि आङ्पूर्व्व इण् आगमने वर्त्तते आसेर्ल्यासिः वयमिति एकत्वेऽपि वङ्कत्वविवक्षा परं तु एकत्वे वा वङ्कत्वमस्मदो ऽविशेषण इत्याङः यूयं दृष्टाः स्य लोपोऽस्यसोरित्यकारलोपः स्वस्ति वः कल्याणं युष्मभ्यं शक्तार्थवषडित्यादिना चतुर्थी द्वीचोषी णामित्यादिना वसादेशः वयं स्वपुण्येन विजितां लभ्यां गतिं या सोगच्छाम: विष्णुरूपे त्वयि दृष्टे शोभना गतिर्भविष्यतीत्याशया एतावन्तं कालं तिष्ठाम इति भावः॥६॥

तस्मिन् कृशानुसाङ्भूते सुतीक्ष्णमुनिसन्निधौ। उवास पर्णशालायां भ्रमन्निशमाश्रमान्॥७॥

तस्मिन्। तस्मिन् शरभङ्गे कृशानुसाङ्भूते कार्त्स्न्येनाग्नीभूते विभाषा सातिकार्त्स्न्ये इति सातिः रामः सुतीक्ष्णस्य मुनेः सन्निधौ समीपे पर्णशालायाम्पर्णकुट्यामुवास उषितवान् तत्र कृताधिवासस्य दृत्तिमाह भ्रमन्निशमाश्रमान् पर्य्यटन् सदा तपोवनानि मुनीनुपासितम्॥७॥

तस्मिन्नित्यादि। तस्मिन् शरभङ्गे कृशानुसाङ्भूते कार्त्स्न्येनाग्नीभूते सति रामः सुतीक्ष्णमुनेः सन्निधौ समीपे पर्णशालायां पर्णकुट्यां उवास वसेश्चानिवासे ठी व्ययश्चेति जिः कार्त्स्न्येऽयस्योरिति षसात् किलादित्यादौ साद्दर्शनात् न षत्वं अनिशं निरन्तरं आश्रमान् भ्रमन् पर्य्यटन् अर्थान्मुनीनुपासितुं॥७॥

वनेषु वासतेयेषु निवसन् पर्णसंस्तरः। शय्योत्थायं मृगान् विध्यन्नातिथेयो विचक्रमे ॥ ८ ॥

वनेषु। वासतेयेषु वसतौ साधुषु पथ्यतिथीत्यादिना ढञ् निवसन् शयानः संस्तीर्य्यत इति संस्तर ऋदोरप् पर्णानि संस्तरो यस्येति पर्णसंस्तरः शय्योत्थायं शय्यायाउत्थाय उत्पूर्व्वात्तिष्ठतेरपादाने परीप्सायामिति णमुल् शय्यते अस्यामिति शय्या संज्ञायामित्यादिना क्यप्। त्वरया मुखधावनादीन्यपि न कृत्वा मृगान्विध्यन् ताडयन् ग्रहिज्यादिना सम्प्रसारणम् तत्रापि नात्मार्थं लुब्ध इत्याह आतिथेयः अतिथौ साधुः पूर्व्ववत् ढञ् विचक्रमे विहरतिस्म वेः पादविहरण इति तङ् ॥ ८ ॥

वनेष्वित्यादि। वासतेयेषु वसतौ निवासे रात्रौ वा साधुषु वनेषु निवसन् वासं कुर्व्वन् शयानोवा पर्णसंस्तरः पत्ररचितशय्यः सन् शय्योत्थायं शय्यायास्त्वरया उत्थाय मृगान् विध्यन् ताडयन् विचक्रमे विहरतिस्म तत्रापि नात्मार्थं बध इत्याह आतिथेयः अतिथौ साधुः ढधेकादिति वसत्यतिथिभ्यां साध्वर्थे ढेय यथोर्लोपइतीकारलोपः शय्योत्थायमित्यभिधानात् पञ्चम्यन्तात् त्वरायां णमुल् किम्वा शय्याया उत्थानं यस्मै इति मृगवेधनक्रियाविशेषणं एतेन शयनोचितकालेऽपि मृगताडननिमित्तं शय्योत्थानं गम्यते तेन च सुतरां त्वरापि अस्मिन् पक्षे भावे घञ् यन् ञ्णिदिति यन् उदः सःस्थास्तम्भोरिति सलोपः शेरतेऽस्यामिति शय्या शीङजयजेति क्यप् शीङोङ्य्येऽणो व्यधौताडे शतृः ग्रहज्यापायोरिति जिः वेःपद्धिरिति विपूर्व्वात् क्रमोमं॥ ८॥

ऋग्यजुषमधीयानान् सामन्यांश्च समर्चयन्। बुभुजे देवसात्कृत्वा शूल्यमुख्यञ्च होमवान्॥ ९ ॥

ऋग्य। ऋक् च यजुश्च ऋग्यजुषम् अचतुरेत्यादिना निपातितम् द्वन्द्वाच्चुदषहान्तात्समाहारे टच् ऋग्वेदं यजुर्वेदञ्च अधीयानान् पठतः इङोऽधिपूर्व्वस्य लटि शानचि रूपम् नलोकेति षष्ठीप्रतिषेधः सामन्यांश्च सामसु साधून् द्विजान् तत्र साधुरिति यत् येचाभावकर्म्मणोरिति प्रकृतिभावः समर्चयन् पूजयन् शूल्यमुख्यञ्च मांसम्बुभुजे भुक्तवान् शूले उखायाञ्च स्थाल्यां संस्कृतम् शूलोखाद्यत् भुजोऽशन इति तङ् किङ्कृत्वा देवसात्कृत्वा देवेभ्यो दत्वा तदधीनङ्कृत्वा देयेचाचेति चकारात्सातिश्च होमवान् होमोविद्यते यस्येति कृताग्निकार्य्य इत्यर्थः॥ ९ ॥

ऋग्यजुषमित्यादि। ऋग्यजुषं ऋग्वेदं यजुर्वेदञ्च अधीयानान् पठतो मुनीन् सामन्यान् सामवेदकुशलांश्च समर्च्चयन् सम्यक् पूजयन् शूल्यं शूलपाचितं उख्यं स्थालीसंस्कृतं च मांसं देवसात्कृत्वा देवाय देयं कृत्वा बुभुजे भुजोऽशने इति सं होमवान् कृताग्निकार्य्यः नित्यं होमोविद्यतेऽस्येति मोङ्मस्सपादिति वतुः ऋक् च यजुश्चेति चैक्याच्चुदषहोरिति टः अधीङ्ध्ययने शानः अध्धोरितीयः सामशब्दात् ढघेकादिति साध्वर्थे ष्यः मन्वर्ज्जेत्यादिना नलोपाभावः अर्च्चक् पूजे चुरादिञन्तात् शतृः देवशब्दात् देयेचाचेति चकारात् चसात् ढघेकादिति शूलोखाभ्यां तत्र संस्कृतेऽर्थे यः॥ ९ ॥

वसानस्तन्त्रकनिभे सर्व्वाङ्गीने तरुत्वचौ। काण्डीरः खाड्गिकः शार्ङ्गी रक्षन् विप्रांस्तनुत्रवान्॥ १० ॥

वसा। असौ रामो वनेष्वानश आत्मवानिति वक्ष्यमाणेन श्लोकेन सम्बन्धः वसानः परिदधानः वसआच्छादने इत्यस्मात् शानच् तरुत्वचौ वल्कले प्रत्यये तन्त्रकः तन्त्रादचिरापहृतइति कन्तन्निभे तत्तुल्ये सर्व्वाङ्गीणे सर्व्वाङ्गाणि व्याप्नुवत्यौ तत्सर्व्वेत्यादिना खः काण्डीरः काण्डोऽस्याऽस्तीति काण्डाण्डादीरन्नीरचौ खङ्गिकः खङ्गोऽस्यास्तीति अतइनि ठनौ खाङ्गिक इतिपाठान्तरम् तत्रखङ्गः प्रहरणमस्येति तदस्यप्रहरणमिति ठक् शार्ङ्गी सधनुः तनुत्रवान् तनुं शरीरन्त्रायतइति तनुत्रम् आतोऽनुपसर्गे कः संसर्गे मतुप् पिनद्धकवचइत्यर्थः स एवम्बिधो विप्रान् ब्राह्मणान् रचन्॥१०॥

वसानइत्यादि। असौ रामो वनेष्वानश इति वक्ष्यमाणश्लोकेनान्वयः कीदृशः तरुत्वचौ वसानः परिदधानः वसलुक्स्तृतौ शानः कीदृशौ तन्त्रकनिभे नूतनवस्त्रतुल्ये तन्त्रात् पटोपकरणात् अचिरोद्धृतं वस्त्रं तन्त्रकं ढघेकादिति विकारसंघेत्यादिना आदिशब्दात् अचिरोद्धृतार्थे तन्त्रशब्दात् कः तन्त्रकस्तु नवाम्बरे इत्यमरः सर्व्वाङ्गीणे सर्व्वाङ्गं व्याप्नुवत्यौ ढघेकादिति तद्व्याप्नोतीत्यर्थे ईनः काण्डीरः प्रशस्तकाण्डयुक्तः गोतृणमेधेत्यादिना अस्त्यर्थे ईरः खाङ्गिकः खङ्गेन युध्यतेऽसाविति ढघेकादिति ष्णिकः शार्ङ्गी शृङ्गस्य विकारः शार्ङ्गं धनुः विकारसंघेति ष्णः शार्ङ्गं विद्यतेऽस्येति नैकाजादिति इन् तनुं शरीरं त्रायते इति तनुत्रं कवचं हनजनादिति डः तद्युक्तः एवम्भूतः सन् विप्रान् रचन्॥१०॥

छित्वाशितं गवीनानि फलैर्येष्वाशितम्भवं। तेष्वसौ द्वन्द्वशूकारिर्व्वनेष्वानश निर्भयः॥११॥

छित्वा। आश्रितास्तृप्ता गावो येषु भवन्ति तृणप्रायत्वात् अषड क्षादिसूत्रेण खः पूर्व्वपदस्य च मान्तत्वन्निपात्यते तान्यरण्यानि छित्वा येषु वनेषु फलैराश्रितम्भवमाश्रितस्य भवनन्तृप्तिर्व्वर्त्तते आश्रितेभुव इत्यादिना भावे खच् तेष्वानभ्र अभ्रवभ्रेति गत्यर्थो धातुः लिटि अतआदेरिति दीर्घे तस्मान्नुड्द्विहल इति नुट् दन्दशूकारिः व्यालानां हन्ता लुपसदेत्यादिना दंशेर्य्यङ् तद न्ताद्यजजपेत्यादिना ऊकः॥ ११॥

छित्वेत्यादि। आश्रितङ्गवीनानि वनानि छित्वा त्यक्त्वा तेषु वनेषु असौ आनभ्र भ्रमतिस्म अभ्र गत्यां ठौ स्यान्तादिति खेरान् आश्रि तास्तृप्ता गावो यत्र तदाश्रितगु आङ्पूर्व्वोऽश्नातिस्तृप्त्यर्थः परे तु तृप्त्यर्थेऽश्नितस्यादौ दीर्घ इत्याहुः ततः स्वार्थे ईनः मकारागमो निपातनात् गोतृप्ता तृणवाहुल्यात्तत्यागः केचित्त्वाहु येषु च फलै राश्रितम्भवं आश्रितेन तृप्तेन भूयते भावघेत्वाश्रिताद्भुव इति खः दन्दशूकानां व्यालानामरिर्हन्ता निर्भयोभयरहितः॥ ११॥

युग्मकं।

**आतीनव्यालदीप्रास्त्रैः सुत्वनः परिपूजयन्। परि षद्वलान्महाब्रह्मैराट नैकटिकाश्रमान्॥ १२॥**

आती। तेषु वनेषु भ्रमन् नैकटिकाश्रमानाट गतवान् अटे रभ्यासस्यातआदेरिति दीर्घत्वं ग्रामस्यान्तिके क्रोशमात्रं त्यक्त्वा यतयोभिक्षवो ये निवसन्ति ते नैकटिकाः निकटे वसतीति ठक् तेषा माश्रमांस्तपोवनानि कीदृशः आतीनव्यालदीप्रास्त्रैः नानाजाती याः अनियतवृत्तयः शरीरमायास्य ये जीवन्ति ते आतास्तेषां य त्कर्म्म तदपि आतन्तेन जीवन्ति इति आतीनाः आतेन जीवतीति

सञ् तेषां व्यालाहिंसाः उपघातकाः तेषु दीप्तास्त्रः ज्वलदायुधः सप्तमीति योगविभागात्सः सुत्वनः सुतवतः परिपूजयन् सोमपायिन इत्यर्थः सुयजोर्ङ्वनिप् तुक् नसंयोगादित्यल्लोपेन पर्षद्वलानिति पर्षस्नेहने अस्मात्पर्षते स्निह्यतीति ष्टुष्णसोदिरित्यच पर्षे र्वाऽङ्गलकादौ णादिकोदिः पर्षत् तच यदि रजःकृष्यासुतिपर्षदो वलजिति तदा पर्षत् विद्यते येषां सुत्वनामिति वलच् अच परि षीदतीति परिषत् क्विबन्तो यदा परिषद्येषा गुणग्राहिणी तदा परिषद्वलं सहायो येषामिति वक्रव्रीहिः महाब्रह्मैर्महाब्राह्मणैः कुमहद्भ्यामन्यतरस्यामिति टच् तैः सहाट ॥ १२ ॥

आतीनेत्यादि । रामो नैकटिकाश्रमान् आट अटगतौ ठी निकटे वसन्ति नैकटिका ढचेकादिति ष्णिकः तेषां मुनीनामाश्रमान् तपोवनानि किम्भूतः नानाजातीया अनियतवृत्तयः शरीरक्लेशेन ये जीवन्ति ते आतास्तेषां यत् कर्म तदपि आतमिति रूढं तेन जीवन्तीति आतीनाः पूर्ववदीनः तेषां मध्ये ये व्याला उपघातकास्तेषु दीप्राणि अस्त्राणि यस्य स तथा। व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनीति विश्वः। सुत्वनः सोमपान् परिपूजयन् षुञ् अभिषवे आसुधिति क्वनिप् ख्स्यतनपितीति तन् आश्रमान् कीदृशान् महाब्रह्मैर्महद्भिः ब्रह्मभिर्ब्राह्मणैः परिषद्वलान् सभायुक्तान् देशाद्ब्राह्मणःकुमहद्भ्यांतुवेति षः परिषीदन्त्यचेति क्विप् परिषत् सभा गोतृणेत्यादिना रजआदित्वाद्वलः नवाचरपादस्यापीष्टत्वात् न चाच श्लोके छन्दोभङ्गः पर्षद्वलानिति पाठे पर्य्युपसर्गस्य इकारलोपो निपातनात्। आस्थानं संसदास्थानी पर्षत् परिषदौ समे इति रभसः। केचित्तु ब्राह्मणवाचके महच्छब्दविशेषणस्य विरुद्धार्थत्वात् महाब्रह्मैर्महातपोभिरुपलक्षितान् सुत्वनः विशेषणे तृती

या नच देशाद्दूरागत इति सूत्रे श्रान्तपर्यायकोऽस्यां शब्द इति नि यम इत्याहुः॥१२॥

परेद्यव्यद्यपूर्व्वेद्युरन्येद्युश्चापि चिन्तयन्। वृद्धिक्षयौ मुनीन्द्राणां प्रियम्भावुकतामगात्॥१३॥

परे। परेद्यवि परस्मिन् आगामिनि दिवसे इत्यर्थः अद्यैत स्मिन्नहनि पूर्व्वेद्युः पूर्व्वस्मिन्नहनि अन्येद्युरन्यस्मिन्नहनि चिराति क्रान्ते चिरगामिनि दिवसे परेद्यवीत्यादिषु दिवसेषु मुनीन्द्राणां वृद्धिक्षयौ उदयापचयौ चिन्तयन् प्रियम्भावुकतां पूर्व्वमप्रियाभाव नियुक्तत्वादतथाभूतः सन् प्रियोभवतीति प्रियम्भावुकः आद्यसुभ गेत्यधिकृत्य कर्त्तरि भुवः खिष्णुच्खुकञाविति खुकञ् तद्भावः तामगात् गतः अर्थान्मुनीन्द्राणामेव परेद्यव्यद्यादयः शब्दाः सद्यःपरुदित्यादिना निपातिताः॥१३॥

परेद्यवीत्यादि॥ परेद्यवि परस्मिन्नहनि पूर्व्वेद्युः पूर्व्वस्मिन्न हनि अन्येद्युः अन्यस्मिन्नहनि च मुनीन्द्राणां वृद्धिक्षयौ धनशरी रादिगतोपचयापचया चिन्तयन् स्मरन् रामः प्रियम्भावुकतां अगात् प्राप्तवान् अप्रियोऽपि प्रियोभवतीति भुवोधेखिष्णुखुकञा विति च्व्यर्थे खुकञ् परेद्यवि अद्यचेति कुतःकाकुह इत्यादिना निपातनात् पूर्व्वान्यान्यतरेति पूर्व्वान्याभ्यां एद्युस्॥१३॥

आतिष्ठद्गु जपन् सन्ध्यां प्रक्रान्तामायतीगवं। प्रात स्तरां पतत्रिभ्यः प्रबुद्धः प्रणमन्रविं॥१४॥

आति। जपन्नस्त्रमिति सामर्थ्यलभ्यं सन्ध्याकालोधिकरण त्वेनात्यन्तसंयोगे द्वितीया सम्यग्ध्यायन्सन्त्यामिति आतश्चोप सर्ग इत्यङ् किमवधिं सन्ध्यामित्याह प्रक्रान्तामायतीगवम् आय न्त्यः आयन्त्यो भवन्ति यस्मिन् काले गावः अस्मिन्नायतीगवं तिष्ठ द्गुप्रभृतीनि चेत्यव्ययीभावसमासत्वात्साधुः नाव्ययीभावादिति यस्मिन् काले सप्तम्या अभ्भावः आङ्पूर्व्वादिणः शतरि इणो यणिति यणि ङीपि च रूपं आयतीति गावोऽपि गोचरात् गोष्ठ मायान्ति दिवसस्यार्द्धनाडिकावशेषे सन्ध्यापि तदैव प्रवर्त्तते कियन्तमेवजपन्नित्याह आतिष्ठद्गु इति तिष्ठन्ति गावोयस्मिन् काले दोहाय गावोहि रात्रिप्रथमयामस्य नाडिकायामती तायां विश्रान्ताः सत्यः उत्थाप्य दुह्यन्ते आतिष्ठदित्याङ्मर्य्या दाभिविध्योरित्यव्ययीभावः तिष्ठद्गुप्रभृतीनि चेति चकारस्या नुक्तसमुच्चयार्थत्वादव्ययीभाव एव पुनः समासान्तरञ्च भवति प्रा तस्तरामिति प्रातरित्यव्ययम्प्रभातवाचि प्रकर्षविवक्षायान्तरप् तदन्तात्किमेतीत्यादिना आम् अतिप्रभाते पतत्रिभ्यः कुक्कुटा दिभ्यः प्रथमम्प्रबुद्ध उत्थितः पञ्चमीविभक्तेइति पञ्चमी रवि मादित्यम्प्रणमन् यदा चरति तदा प्रियम्भावुकतामगादिति पूर्व्वेण योज्यम्॥ १४॥

आतिष्ठदित्यादि। प्रियम्भावुकतां अगादिति पूर्व्वेणान्वयः तिष्ठन्ति स्थिरीभवन्ति गावोयस्मिन् स तिष्ठद्गु कालः रात्रेः प्रथ मनाडिका त[illegible] हि विश्रान्ता गावः पश्चादुत्थाप्य दुह्यन्ते आयन्ति गोष्ठं गावोयस्मिन् काले स आयतीगवकालः अर्द्धास्तमितभा स्करः प्रायशस्तत्रैव गवानयनात् आङ्पूर्व्वादिणः शतृ तिष्ठद्गुवा

यतीगवशब्दो कालेऽव्ययीभावे निपातितौ आयतीगवकाले प्रकाशां आरभ्य सन्ध्यां व्याप्य तिष्ठद्गुकालं यावत् जपन् अर्थात् आरभ्य अन्यारभ्येत्यादिना आङ्योगे पञ्चमी लुक्परादित्यादिना पञ्चमीलुक् सन्ध्यामिति मदाध्वादीति द्वितीया आयतीगवमिति चोप्योर्व्वेति सप्तम्यामः प्रातश्चरामिति प्रभाते पतत्त्रिभ्यः कुक्कुटादिभ्योऽपि प्रबुद्धोऽधिकप्रबोधवान् तेभ्योऽपि प्रागुत्थितः सन् रविं प्रणमन् अधिकभावविवक्षायां पञ्चमी अभिधानात् पक्षिशब्देभ्यः प्रबुद्ध इत्यन्ये किमेत्याद्येति चतरां ॥ १४ ॥

युग्मकं।

ददृशे पर्णशालायां राक्षस्याभीकयाथ सः। भार्य्योढं तमवज्ञाय तस्थे सौमित्रयेऽसकौ ॥ १५ ॥

. ददृशे। पर्णानां शालायां स्थितः स रामः राक्षस्या ददृशे दृष्टः कीदृश्या अभीकया कामुक्या अनुकाभिकेत्यादिना निपातितः दृशेः कर्म्मणि लिट् अथ दर्शनानन्तरं भार्य्योढं ऊढभार्य्यमूढा भार्य्या यस्येति आहिताग्न्यादिषु दर्शनात् निष्ठान्तस्य परनियातः अवज्ञाय अनादृत्य सद्धार्य्यत्वात् असकौ राक्षसी पापासौ कुत्सायामव्ययसर्व्वनाम्नामकच् सौमित्रये लक्ष्मणाय श्लाघह्नुङ्स्थेत्यादिना सम्प्रदानसंज्ञा तस्थे स्वाभिप्रायमैथुनायाविष्कृतवती प्रकाशनस्थेयाख्ययोश्चेति प्रकाशने तङ् ॥ १५ ॥

ददृश इत्यादि। अभीकया कामुक्या राक्षस्या सूर्पणखया पर्णशालायां स रामोददृशे कर्म्मणि ठी अथ दर्शनानन्तरं

भार्य्योढं कृतविवाहं तं रामं अवज्ञाय सभार्य्यत्वादनादृत्य असकौ राक्षसी सौमित्रये लक्ष्मणाय तस्मै स्वस्थित्या मैथुनाभिप्रायं प्रकाशयामास इत्यर्थः प्रतिज्ञानिर्णयप्रकाश इति मं यस्मैदित्येत्यादिना चतुर्थी असकाविति त्यादित्यासेत्यादिना ऽदसष्टेः पूर्व्वोऽक् परमते अविज्ञाता निन्दिता वा असौ असकौ तथाच। कुपायां निन्दनेऽज्ञाने नीतौ दानेन मानिते। प्रायोऽगन्त्यस्वरात् पूर्व्वः सर्व्वनामतिङव्ययादिति। ऊढा भार्य्या येन स तथा अग्न्याहितादित्वात् पक्षे परनिपातः॥ १५॥

दधाना वलिभं मध्यं कर्णजाहविलोचना। वाक्त्वचेनातिसर्व्वेण चन्द्रलेखेव पक्षतौ॥ १६॥

दधा। सा तन्मार्थयाञ्चक्र इति वक्ष्यमाणेन सम्बन्धः कीदृशी मध्यं स्तनजघनयोरन्तरम्वलिभम्वलयोऽस्मिन् सन्तीति तुन्दिवलिवटेर्भः दधाना धारयन्ती कर्णजाहविलोचना कर्णजाहङ्कर्णमूलसमीपमित्यर्थः तस्य पाकमूलइत्यादिना जाहच् कर्णजाहयोर्विश्रान्ते विलोचने यस्या इति सप्तम्युपमानेत्यादिना उपपदलोपी बहुव्रीहिः वाक्त्वचेन वाक् त्वक्चेति प्राण्यङ्गत्वादेकवद्भावः द्वन्द्वाच्चुदषहान्तादिति टच् अतिसर्व्वेण अतिक्रान्तेन सर्व्वम् अत्यादय इति सः एकविभक्तिचापूर्व्वनिपात इति सर्व्वशब्दस्योपसर्जनत्वेऽपि पूर्व्वनिपातो न भवति अपूर्व्वनिपात इति प्रतिषेधात् वाक्त्वचेन वाङ्मयेन माधुर्य्येण मार्द्दवेन चासाधारणेनोपलक्षितेनेत्यर्थः इत्थम्भूते तृतीया चन्द्रलेखेव पक्षतौ तनु

स्मात् पक्षोऽर्द्धमासः तस्य मूले प्रतिपदि पक्षान्तिः ॥ १६ ॥

दधानेत्यादि। सा तं प्रार्थयाञ्चक्रे इति चतुर्थश्लोकेनान्वयः व लिभं वलियुक्तं मध्यं दधाना गोतृणमेधेत्यादिनेभः कर्णस्य मूलं कर्णजाहः तत्र विलोचनं यस्याः सा तथा कर्णान्तायतनेत्रेत्यर्थः अतिसर्व्वेण माधुर्य्यसौन्दर्य्याभ्यां सर्व्वमतिक्रान्तेन वाक्कलचेन उ पलक्षिता वाक लक्ष इति द्वन्द्वैकवद्भावः अचतुरेत्यादिना सूत्रेणादन्तः। विशेषणत्वाद्वाक्तत्वम् पूर्व्वम्। विशेषणैर्युक्ता पक्षती पक्षमूले प्रतिपदि चन्द्रलेखेव द्रष्टुं सुदुलात् ॥ १६ ॥

सुपाद् द्विरदनासोरूर्मृदुपाणितलाङ्गुलिः। प्रथिमानं दधानेन जघनेन घनेन सा ॥ १७ ॥

सुपा। शोभनौ पादौ यस्याः असौ सुपात् सङ्ख्यासुपूर्व्वस्येति पादान्तलोपः पादोऽन्यतरस्यामिति यदा ङीप् नास्ति तदेत्थं रूपम् द्विरदनासोरूर्द्विरदनासे इव करिपोतकराविव ऊरू यस्याः उपमानपूर्व्वबहुव्रीहिः ऊरूत्तरपदादौपम्य इति ऊङ् रद्यते अनेनेति रदः हलः पुंसि संज्ञायामिति घः करणे द्वौ रदौ य स्येति द्विरदः मृदुपाणितलाङ्गुलिः तलञ्च अङ्गुलिश्चेति द्वन्द्वः तत्र घ्यन्ताल्पाच्तरयोः अल्पाच्तरस्य पूर्व्वनिपातः पाण्योस्तला ङ्गुलिः पाणितलाङ्गुलिः मृदुः पाणितलाङ्गुलिर्यस्या इति योज्यं प्रथिमानम्पृथुतान्दधानेन धारयता घनेन उपचितेन जघनेनो पलक्षिता सा राक्षसी ॥ १७ ॥

सुपादित्यादि। शोभनौ पादौ यस्याः सा संख्यासूपमानादिति पादस्य पाद्भावः द्विरदनासेव हस्तिशुण्डेव ऊरुर्यस्याः सा तथा

रामलक्ष्मणेत्यादिना ऊप् मृदु पाणितलं भ्राङ्गुलिश्च यस्याः सा तथा ये तु अध्यायः पूर्व्वनिपातं तथा प्राण्यङ्गत्वे समाहारं वदन्ति तन्मते प्रथमं तलाङ्गुलिशब्दयोः समाहारद्वन्द्वः तदनु पाणिना सह षष्ठीसमासः तदनु मृदुना बहुव्रीहिः प्रथिमानं महत्त्वं दधानेन निविडेन जघनेनोपलक्षिता। पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरइत्यमरः॥ १७॥

उन्नसं दधती वक्त्रं शुद्धदल्लोलकुण्डलं। कुर्व्वाणा पश्यतः शंयून् स्रग्विणी सुहसानना॥ १८॥

उन्न। उच्यते अनेनेति वक्त्रम् सर्व्वधातुभ्य औणादिकष्टन् तच वक्त्रशब्दो मुखैकदेशे वर्त्तमानोऽपि कविभिः समुदाये प्रयुज्यते वक्त्रमुखमुन्नसन्दधती नाभ्यस्ताच्छतुरिति नुम् न भवति उन्नता नासिका यस्मिन्निति अज्नासिकायाः संज्ञायान्नसञ्चेत्यधिकृत्य उपसर्गाच्चेत्यच् नासिका च नसादेशमापद्यते शुद्धदत् शुद्धाः शुक्ला दन्ता यस्मिंस्तच्छुद्धदत् अग्रान्तशुद्धेत्यादिना दत्रादेशः लोले चञ्चले कुण्डले यस्मिन् तत् लोलकुण्डलं पश्यतो जनान् शंयून् विद्यमानसुखान् कुर्व्वाणा शं सुखन्तदस्यास्तीति कंशम्भ्यांवभयुस्तितुतयस इति युस् सिलात्पदसंज्ञा अनुस्वारः अपशमो वा शंयून् कुर्व्वाणा पश्यतान्नु पीडाकरी स्रग्विणी मालावती अस्मायेत्यादिना विनिः सुहसानना हसनं हसः सनहसोर्वेत्यप् शोभनहसनमाननं यस्याः सा॥ १८॥

ऊनसमित्यादि । ऊर्द्ध्वनासिकं वक्त्रं मुखं दधती उपसर्गाच्चासि काया नसादेशो वक्रश्रीत्वावितिपरे स्वमते नसाशब्दस्य रूपं त थाच रभसः खपनं वदनं तुण्डमाननं नासिका नसा । नस्या नासा च नासिकेति कोषान्तरं । उच्यते अनेनेति वक्त्रं आसुधितिचः वक्त्रं कीदृशं शुद्धदत् शुद्धादन्तायश्चेति दन्तस्य दद्रादेश इति परे स्व मते दत्शब्दोऽस्ति लोले चञ्चले कुण्डले यत्र मुखे तत्तथा सा किम्भूतापश्यतोजनान् शंयून् सुखिनः कुर्वाणा शंकंभ्यांययुतत्तु तिवभा इति अस्त्यर्थे युः खमिणी मालावती लक्ष्मीधात्रमयादि त्वेति अस्त्यर्थे विन् शोभनो हसो यत्र तादृशमाननं यस्याः सा तथा ॥ १८ ॥

प्राप्य चञ्चूर्य्यमाणासौ पतीयन्ती रघूत्तमं । अनुका प्रार्थयाञ्चक्रे प्रियाकर्त्तुं प्रियम्वदा ॥ १९ ॥

प्राप्य टीकिला चञ्चूर्य्यमाणा गर्हितमाचरन्ती प्राणिनो हन्त्या इति चरेर्लुपसदेत्यादिना भावगर्हायां यङ् चरफलोश्चेत्य भ्यासस्य नुक् उत्परस्यातइत्युत्वम् हलिचेति दीर्घत्वं पतीयन्ती आत्मनः पतिमिच्छन्ती सुप आत्मनः क्यच् अनुका अभिलाषुका अनुकेत्यादिना निपातितः रघूत्तमं लक्ष्मणंप्रार्थयाञ्चक्रे प्रार्थि तवती प्रियाकर्त्तुमनुलोमयितुं पतिर्मे स्यादिति सुखप्रियादानुलो म्यइति डाच् । प्रार्थनामाह ॥ १९ ॥

प्राप्येत्यादि । असौ राक्षसी रघूत्तमं लक्ष्मणं प्राप्य प्रिया कर्त्तुं प्रार्थयाञ्चक्रे प्रार्थितवती किं कुर्व्वती चञ्चूर्य्यमाणा गर्हितं पुनःपुनश्चरन्ती गत्यर्थात् लुपसदचरेति गर्हार्थे यङ् चरफ

लोऽस्योरुङ्भमुरिति खेर्नन् उक्त उकारस्य धनपतयीति दीर्घः प तीयन्ती आत्मनः पतिमिच्छन्ती क्याम्याद्यस्येति क्यः घोऽज्य रे इति दीर्घः किम्भूता सा अनुका कामुकी प्रियम्बदा प्रियं वद तीति प्रियवशाद्वयेत्यादिना खः खित्यनाजेति मन् प्रियाकर्त्तु मिति सपचनिष्पचेत्यादिना आनुकूल्याय डाच्॥ १९ ॥

## कुलकं॥

सौमित्रे मामुपायंस्थाः कम्रामिच्छुर्वशम्वदां। सु भोगीनां सहचरीमशङ्कः पुरुषायुषं॥ २० ॥

सौमि। हे सौमित्रे इच्छुरेषणशीलः विन्दुरिच्छुरिति निपा तितः अशङ्कः निर्व्विकल्पः सन् किम्भावयिष्यतीति मामुपायंस्थाः परिणय आशंसायाम्भूतवच्चेति लुङ् उपाद्यमः स्वकरण इति तङ् विभाषोपयमन इत्यकित्त्वपचे रूपम् कम्राम् नमिकम्पीत्यादिना रः वशंवदां अहन्ते वश्येति वदन्तीम् त्वद्भोगीनां त्वच्छरीराय हितां अवैधव्यादिलचणयोगात् आत्मन्विश्वजनेत्यादिना खः स हचरीं सहगामिनीं भिचासेनादायेषु चेति चकारस्यानुक्तसमुच यार्थत्वात् टप्रत्ययः कियन्तङ्कालं पुरुषायुषम्पुरुषस्यायुर्यावत् अचतुरेत्यादौ निपातितः अत्यन्तसंयोगे द्वितीया चरणक्रियायाः कालस्य संयोगात् यथा मासमुषित इति॥ २० ॥

सौमित्रेइत्यादि। एतत् प्रार्थयाञ्चक्रे इति पूर्व्वेणान्वयः हे सौ मित्रे त्वं इच्छुः सन् अशङ्कः सन् मामुपायंस्थाः परिणय अभिधा नात् आशंसायां टो उपयमोविवाह इति मं यमः स्वचनेवाद्

हाले इति सेर्विभाषितकित्वात् पचे ञमलोपाभावः कीदृशीं को
कथां कामयमानां रूपवतीमित्यन्ये स्त्रियद्दीपेत्यादिना रः यशस्व
दां अहं ते वश्येति वदन्तीं प्रियवशादित्यादिना खः सुभोगीनां सु
भोगाय हितां विकारसंघेत्यादिना ईनः भुज्यतेऽनेनास्मिन् वेति
भोगः शरीरं मैथुनाद्युपभोग इत्यन्ये पुरुषस्यायुर्जीवितकालः
निपातनात् अत् स्वार्थे ष्णो वा पुरुषायुषं कालं व्याप्य सहचरीं
सह चरेति चरगष्टक् कर्म्मप्रतिरूपकोऽयं सहशब्दः किम्वा
पचादित्वादच् नदा[illegible]दीप् सदाश्वादीति द्वितीया इच्छती
ति इच्छुः विन्दिच्छ इति निपातः॥ २० ॥

तामुवाच स गौष्ठीने वने स्त्रीपुंसभीषणे। असूर्य्यं
पश्यरूपा त्वं किमभीरुररार्य्यसे ॥ २१ ॥

तामु। राक्षसीं लक्ष्मण उवाच उक्तवान् किमित्याह गौष्ठीने
वने गोष्ठं भूतपूर्व्वं यस्मिन्वने इदानीन्तामापि न ज्ञायते गोष्ठात्
खञ् भूतपूर्व्व इति खञ् स्त्रीपुंसभीषणे स्त्री च पुमांश्चेति स्त्रीपुंसौ
अचतुरेत्यादौ निपातितौ तयोर्भीषण इति षष्ठीसः विभेतेर्णिचि
हेतुभये षुक् तदन्तात् कृत्यल्युटो बहुलमिति कर्त्तरि ल्युट् तस्मि
न्नभीरुः सती किमित्यरार्य्यसे अत्यर्थमटसि अर्त्तेः सूचिसूत्रीत्या
दिना यङ् यङि चेति गुणः नन्द्रा इति प्रतिषेधस्य प्रतिषेधो यका
रपरस्य न द्वित्वनिषेध इति रेफो द्विरुच्यते भयशीला भीरुः
भियः क्रुक्लुकनौ क्रियाशब्दत्वादूङुत इति ऊङ् न भवति अमनुष्य
त्वाच्च तथाहि लक्ष्मणेनामानुषीयमिति ज्ञाता तथाच भाष्या द

चंपदयाह असूर्य्यम्पश्यरूपा अतिगोपनीयतया सूर्य्यमपिविदु र्दर्शनख पश्यतीति असूर्य्यललाटयोरित्यादिना खश् पाघ्रेत्यादिना पश्यादेशः असूर्य्यम्पश्यं रूपं यस्या इति सः सा न पश्यतीति रूपमपि न पश्यतीत्युक्तम् ॥ २१ ॥

तामित्यादि। तां राक्षसीं लक्ष्मण उवाच किमित्याह त्वं वन किमर्थमभीरुः सती अटाट्यसे अत्यर्थं भ्रमसि ऋगतौ सूचसूचेति यङ् स्यायन्तॄतोणुरिति गुणः नाजन्तादेरादिर्द्विरिति निषेधात् आद्यचरस्य न द्विः स्यादोनवर्द्धये इति वर्ज्जनात् रेफसहितस्य यस्य द्वित्वं खेराद्यच इति खेर्यलोपः घोऽनितइति खेर्दीर्घः वने किम्भूते गोष्ठीने भूतपूर्व्वं गोष्ठं यस्मिन् सम्प्रति गोसम्बन्धोऽपि नास्ति अतएव स्त्रीपुंसयोर्भीषणे भयजनके गावस्तिष्ठन्ति अस्मिन्निति गोष्ठं निपातनात् विकारसंघेत्यादिना भूतपूर्व्वेऽर्थे गोष्ठात् खीनः स्त्री च पुमांश्च स्त्रीपुंसौ निपातनात् ण्यन्तभीधातोर्नन्द्यादित्वादनः भीर्भीषवेति भीषादेशः भीषिचिन्तीति सूत्रनिर्द्देशात् भीषधातुरप्यस्तीति केचित् कीदृशी असूर्य्यपश्यरूपा सूर्य्यमपि न पश्यति असूर्य्यपश्यं घटीखारीत्यादिना खश् स्यादनेति दृशः पश्यादेशः असूर्य्यपश्यं रूपं यस्याः सा तथा दृशिना सम्बन्धस्य नञः सूर्य्येण सह समासो गमकत्वात् नबिभेतीति अभीरुः कुकुकाभिय इति क्रुः क्रियावचनस्य भीरुशब्दस्य मनुष्यजातित्वाभावात् ऊतोऽयुक्त रज्वादेरिति सूचेण ऊप् प्रत्ययः॥ २१ ॥

भानुषानभिलष्यन्ती रोचिष्णुर्दिव्यधर्म्मिणी। तस्य पुरायमाणेह स्वतन्त्रा कथमञ्चसि॥ २२॥

मानु। मनोरपत्यानि मानुषाः मनोर्जातावञ्यतौ षुक् तान भिलषन्ती कामयन्ती रन्तुमिच्छन्ती वाभ्याशेत्यादिना ष्णन् रो चिष्णुः रोचनस्वभावा अलंकृञीत्यादिना इष्णुच् अतएव दिव्य धर्मिणी दिविभवा दिव्याः देवाः राक्षसा अपि देवयोनित्वात् तेषान्धर्मः स्वभावः सोऽस्या अस्तीति धर्मशीलेत्यादिनेनिः अप्स रायमाणा अप्सरा इवाचरन्ती राक्षसभावङ्गोपयितुमिति भावः उ पमानादाचारइत्यधिकारे कर्तुः क्यङ् सलोपश्च ओजसोऽप्सर सोनित्यमिति वचनात् इह वने स्वतन्त्रा कथमश्नुषि भ्रमसि स्व आत्मा तन्त्रः प्रधानं यस्याः अपराधीनत्वात् अनयोक्त्या राक्षसी त्वन्दर्शयति॥ २२॥

मानुषानित्यादि। त्वं स्वतन्त्रा सती इह वने कथमश्नुषि भ्रम सि स्वं तन्त्रं प्रधानं यस्याः सा तथा तन्त्रः कुटुम्बे कृत्ये स्यात् कार णेऽपि परिच्छदे। शास्त्रे प्रधाने सिद्धान्ते तन्त्रवाये गदोत्तम इति विश्वः। मनोरपत्यानि मानुषाः मनोर्जातावञ्यतौ षुक् परसूत्रे णापेत्यार्थे षण् स्वमतेऽभिधानात् तानभिलष्यन्ती कामयमाना क्रमक्रमेति पचे ष्यन् रोचिष्णुर्दीप्ता भ्राजभूसहेति इष्णुः दि विभवानां गन्धर्वादीनां योधर्मस्तद्युक्ता नैकाचाजादितीम् दिव्ये ति ढगेकादिति भवार्थे यः उपसुङितिसूत्रस्य पदान्तविषयत्वं उत्तरपदस्य अपदान्तत्वासम्भवात् युभ्यामित्यादौ दान्तवत्त्व मीति दान्तत्वादुत्वं नदंतसाविति पदनिषेधात् अत्र न उत्वं अ प्सरस इव आचरन्ती सानुस्वरति ङ्यः सलोपश्च घोऽज्यरे इति दीर्घः॥ २२॥

उग्रंपश्याकुलेऽरण्ये शालीनत्वविवर्जिता। कामुक प्रार्थनापट्वी पतिवत्नी कथन्न वा॥ २३॥

उयम्। उयम्पश्यन्तीत्युग्रम्पश्याः पापाश्रयत्वात् शवरादयः उग्रम्पश्येत्यादिना खश् निपात्यते तैराकुले व्याप्ते अरण्ये पति वत्नी जीवत्पतिः कथङ्केन प्रकारेण न वा नैवं भवसीत्यर्थः अन्त र्वत्पतिवतोर्नुगित्यत्र पतिर्विद्यते अस्या इति मतुप् सिद्धः जीव त्पत्यां मतुपो वत्वं निपात्यते नुकञ्चैव विधीयते ङीप्प्रत्यय स्तूगित्वादेव सिद्धः शालीनत्वविवर्जिता अधृष्टतया वर्जिता शा लाप्रवेशमर्हतीति शालीनकौपीने इति खञ् निपात्यते अधृष्टे भिधेये प्रवेशशब्दस्य लोपः तस्य भावः शालीनत्वं कामुकः का मशीलः लषपतेत्यादिना उकञ् तस्य प्रार्थनायामङ्गी चतुरा वोतोगुणवचनादिति ङीष् ॥ २३ ॥

उग्रंपश्याकुलेइत्यादि। कथं वा त्वं पतिवत्नी सभर्तृका न भव सि पतिमत्वे ईदृक्ख्यातव्यासम्भवात् नारीसखीत्यादिना पतिश ब्दात् मतोर्वत्वादेशो निपातितः शालां प्रवेष्टुमर्हति शालीना अधृ ष्टा विकारसंघेत्यादिना ईनः शालीनाया भावः शालीनत्वं पुम्वत् स्युक्तपुंस्कइति पुम्वत् शालीनत्वविवर्ज्जिता धृष्टेति फलितार्थः अ रण्ये कामुकस्य प्रार्थनायां दक्षा अट्टखाभूकमगमेति उकः अर ण्ये किम्भूते उग्रंपश्यन्ति उग्रंपश्याः सिंहव्याघ्रादयः पापाश्रय त्वात् शवरादयोवा तैराकुले व्याप्ते घटीखारीत्यादिना उग्रश ब्दादृशः खश् ॥ २३ ॥

राघवं पर्णशालायामिच्छानुरक्षसं पतिं। यः स्वा मी मम कान्तावानैपकर्णिकलोचनः ॥ २४ ॥

राघवं। रामम्पर्णशालायामवस्थितम्पतिमिच्छ अनुरहसं विवेकात्मानमनुगतोरहइति विगृह्य अन्वतप्राड्हसं इत्यच् योराघवो ममापि स्वामी प्रभुः स्वामिन्नैश्वर्य्यइति निपातितम् कान्तावान् सभार्य्यः प्रहृत्तसम्भोगोऽसौ नाहमिति दर्शयति तमेव रूपशौर्याभ्यां वर्णयन्नाह औपकर्णिकलोचनः कर्णयोः समीपमुपकर्णं समीपार्थे अव्ययीभावः तत्र प्रायभवइति उपजानूपकर्णोपनीवेठक् शेषमपि शब्दद्वयमयोक्तमिति औपकर्णिके लोचने यस्य कर्णान्तायतलोचनइत्यर्थः ॥ २४ ॥

राघवमित्यादि। पर्णशालायां स्थितं रामं पतिमिच्छ विधिनिमन्त्रणेति आमन्त्रणे णी अनुगतं रहोविजनस्थानं रतं वा यस्य तं तस्मात्तदाड्हसइति अः योममापि स्वामी ईश्वरः तस्मिन् सति मद्वरणं न युक्तमिति कान्तावान् एतेन स्त्रीसुखाभिज्ञोऽपि अहन्तु तपस्वीति ध्वनिः कर्णयोः समीपं उपकर्णं तत्र भवइति ठघेकादित्यादिना स्थिकः तादृशे लोचने यस्य स कर्णायतनेत्रइत्यर्थः एतेन रूपवत्वं दर्शितं ॥ २४ ॥

वपुश्चान्दनिकं यस्य कार्णवेष्टनिकं मुखं। संग्रामे सर्म्मकर्म्मीणौ पाणी यस्यौपजानुकौ ॥ २५ ॥

वपुः। यस्य राघवस्य वपुः शरीरश्चान्दनिकश्चन्दनेन सम्पद्यते प्राप्तशोभं भवति मुखञ्च कार्णवेष्टकिकं कर्णवेष्टकाभ्यां कुण्डलालङ्काराभ्यां कार्णवेष्टकिकमतत् उभयत्र सम्पादिनीति ठक् पाणीहस्तौ संग्रामे युद्धे सर्म्मकर्म्मीणौ धनुःखड्गादिव्यापार

कर्माणि व्यापृत: तत्सर्व्वादेरिति खः औपजानुकौ आजानुकौ आ जानुलम्बावित्यर्थः अत्र ठक् इसुसुक्तान्तात्कः ॥ २५ ॥

वपुरित्यादि। यस्य रामस्य वपुश्चान्दनिकं चन्दनेन राजितं इति ढघेकादिति ष्णिकः यस्य मुखं कर्णवेष्टनाभ्यां कुण्डलाभ्यां राजितं इति पूर्व्ववत् ष्णिकः एतेन विलासित्वं दर्शितं यस्य पाणी हस्तौ संग्रामे युद्धे सर्व्वस्मिन् कर्मणि धनुः खड्गादिव्यापार रूपे कुशलौ विकारसंघेति ईनः सर्व्वादेःपथ्यङ्गकर्मपत्रपात्राच्च व्याप्नोतीत्यर्थे ईनः इति परः तन्मते सर्व्वकर्मणि व्यापृतः इत्यर्थः व्यापनमत्र तत्करणद्वारैव एतेन वीरत्वं औपजानुकौ उप जानु जानुसमीपे भवौ तावत्प्रलम्बावित्यर्थः एतेन महापुरुषलक्षणं ढघेकादिति कण् तमिक्षेति योजना ॥ २५ ॥

बद्धोदुर्व्वलरक्षार्थमसिर्येनौपनीविकः। यश्चापमाश्मनप्रख्यं सेषुं धत्तेऽन्यदुर्व्वहं ॥ २६ ॥

बद्ध। येन असिः खड्गः औपनीविकः नीवीसमीपे प्रायेण भवतीति स हि नीवीमाप्य वर्त्तमानः पार्श्वयोस्तोर्द्धन्निबद्धः किमर्थं दुर्व्वलरक्षार्थन्दुर्व्वलरक्षायै इदमित्यस्मिन्नर्थे चतुर्थी तदर्थेत्यादिना सः तत्रार्थेन नित्यसमासः सर्व्वलिङ्गता च यश्चाप न्धनुर्द्धत्ते धारयति आश्मनप्रख्यं अश्मनो विकार इत्यण् अश्विति प्रकृतिभावे प्राप्ते अश्मनोविकार उपसङ्ख्यानमिति टिलोपः पाक्षिकः विभाषाकिश्रोरित्यतो मण्डूकप्लुत्या विभाषाग्रहणान

हृत्ते: अन्यथात्मन एव भवति आत्मनेन प्रख्या सादृश्यमस्य तदा त्मनप्रख्यमुपघटितमिव येषुं शरं अन्यदुर्व्वहं दु:खेनोह्यतइति खल् रामादन्येन दुर्व्वहमित्यर्थ: ॥ २६ ॥

यद्धइत्यादि। येन रामेण अधिर्व्वद्ध औपनीविक: नीवीसमीपे भव: वामपार्श्वाधोभागस्थायीत्यर्थ:। स्त्रीकटीवस्त्रबन्धेऽपि नीवी मूलधनेऽपिचेत्यत्र स्त्रीपदमुपलक्षणं अत्र वा लक्षणा उपनीविश ब्दात् ठधेकादिति ष्णिक: यस्यापं धत्ते अश्मैवात्मन: प्रस्तर: वि कारसंधेत्यादिना स्वार्थे ष्ण: मनवर्म्मेत्यादिना अविकारष्णेऽन त्मस्य मलोपनिषेध: तत्प्रख्यं तत्सदृशं अश्मनि जातं अश्ममयं इति केचित् येषुं शरयुक्तं अन्यदुर्व्वहं रामादन्येन दु:खेन उह्यतेइति ईषद्दु:सोरिति खल् दुर्व्वलानां रक्षैव अर्थ: प्रयोजनं यस्य खड्ग बन्धनस्य चापधारणस्य च तत्तया तमिच्छेति योजना ॥२६॥

जेता यज्ञद्रुहां संख्ये धर्म्मसन्तानसूर्व्वने। प्राप्य दारगवानां यं मुनीनामभयं सदा ॥ २७ ॥

जेता। यज्ञाय द्रुह्यन्तीति यज्ञद्रुहो राक्षसा: सत्सूद्विषेत्यादि ना क्विप् तेषां संग्रामे जेता तृजन्तोऽयम् ततश्च क्रन्मयोगे कर्म्मणि षष्ठी धर्म्मसन्तानसू: पूर्व्ववत् क्विप् धर्म्मरत इत्यर्थ: वने वर्त्तमा नानाम्मुनीनां वानप्रस्थादीनामित्यर्थ: तेषाच्चार्य्याग्निपरिग्रहात् यानि दारगवानि दाराश्च गावश्चेति दारगवानि अचतुरेत्या नादि निपातितानि दारयन्तीति दारा: दारजारौ कर्त्तरि णि लुकेतिघञ् तेषाच्च येनाभयं सदा दत्तमिति योज्यम् येषामेव प्राप्तिक्रिया तेषामेवाभयमिति समानकर्तृकत्वम् ॥ २७ ॥

जेतेत्यादि। यत्राय इ श्रान्ति यत्र दृष्टा राक्षसाः आसुषिति क्विप् तेषां जेता संख्ये युद्धे धर्म्मसम्मानं सते इति क्विप् यं प्राप्य वने सम्बन्धिनां दारगवादीनां सदा अभयं भयाभावः दाराश्च गावश्च दारगवानि निपातनात् दारयन्तीति दाराः कभावेऽ मीदति कर्त्तरि घञ् पूर्व्वकाले इति सूत्रे व्याख्यानात् विष्णुं नत्वा सौति इत्युदाहरता एककर्तृकयोर्धात्वोः प्राक्काले क्त्वाच् भवतीति लब्धं अत्र च येषां प्राप्तिस्तेषामेव यद्भयं तदभाव उक्त इति समानकर्तृत्वमस्त्येव ग्रामान्नागच्छतीतिवत् क्रियानिषेधेऽपि अन्तरङ्गस्य क्रियाश्रितकार्य्यस्य निवृत्तेः केचित्तु स्थितानामित्यध्याहरन्ति तमिच्छेति योजना॥ २७॥

ततोवावृत्यमानासौ रामशालां न्यविक्षत। माम् पायंस्त रामेति वदन्ती सादरं वचः॥ २८॥

ततः। ततो लक्ष्मणवचनानन्तरमसौ राक्षसी वावृत्यमाना रामं वृण्वाना वावृतुवरणइति दैवादिकः आत्मनेपदी रामशालां रामस्य पर्णकुटीरं न्यविक्षत प्रविष्टा विशेः शलइगुपधादनिटः क्सः नेर्विशइति तङ् मामुपायंस्त रामेति हे राम अहं प्रार्थये भवान् मामुपायंस्त परिणयत्विति वाक्यभेदेन योज्यम् आशंसायाभूतवच्चेति लुङ् उपायमः स्वकरण इति तङ् विभाषोपयमनम इत्यकित्त्वपक्षे रूपम् इत्येवं वचः सादरं वदन्ती॥ २८॥

ततइत्यादि। ततो लक्ष्मणवचनानन्तरं असौ राक्षसी वावृत्य

माना रामं वृख्वती रामस्य शालां वृहं न्यविशत विशशाप्रवेशे वि पराञ्जीति सं तत् ह्रशषोऽनिमिजुङ इति सक् वावृत्यमानेति वा वृत्युङ् आशंसायां सम्भक्तौवरणेच वावृतधातुः यित्वाद्दैवादिकः ङित्वादात्मनेपदी हे राम भवान् मां उपायंस्त परिणयतु इति वचः सादरं वदन्ती उपयमोविवाहे इति सं आशंसायां टौ अभि धानात् मास्मिनघोष्याविति योगविभागात् अन्यत्रापि घीष्याविति देवीदासचक्रवर्त्ती ॥ १८ ॥

अस्त्रीकोऽसावहं स्त्रीमान् स पुष्यतितरां तव। पति रित्यब्रवीद्रामस्तमेव व्रज मा मुचः ॥ २९ ॥

अस्त्री। असौ लक्ष्मणोऽस्त्रीकः नं विद्यते अस्य स्त्रीति नद्यृतश्चेति कप् न कपीति ह्रस्वप्रतिषेधः अहं पुनः स्त्रीमान् सभार्य्यः प्रशंसा यामतुप् स एव लक्ष्मणः पुष्यतितराम् अतीव पुष्यति लक्ष्मणस्तव पतिः तिङश्चेति तरप् किमेदित्याम् तस्मात्तमेव लक्ष्मणं व्रज गच्छ मा मुचः मा त्याक्षीः मुचेर्लुङ् लृदित्वादङ् इति एवमब्रवी द्रामः उक्तवान् आदादिकस्य ब्रूञोलङि ब्रुवईडिति ईटि रूपम् ॥ २९ ॥

अस्त्रीकइत्यादि। इति रामस्तामब्रवीत् किन्तदित्याह असौ लक्ष्मणः अस्त्रीकः न विद्यते स्त्री यस्य इति ऋृतःकः अहं स्त्रीमान् प्रशस्तस्त्रीयुक्तः अतः स एव तव पतिः पुष्यतितरां त्वामित्यर्थात् पुष्यैात्पुष्टौ किमेत्याघेति उत्कर्षे चतरां भविष्यत्सामीप्ये क्तौ अ भिधानात् किम्वा यावत्पुराभ्यां भव्ये इत्यस्य योगविभागात् तत्र भव्ये इति सामीप्ये सप्तमी तुष्यतीति क्वचित् पाठः तस्मात्तमेव

लक्ष्मणमेव व्रज मा मुचः मा त्याक्षीः मुचु अपञ्जीमोक्षणे लृदि त्वात् शासुलिहुदिति ङः ॥ २८ ॥

लक्ष्मणं सा वृषस्यन्ती महोक्षं गौरिवागमत् । मन्म थायधसम्पातव्यथ्यमानमतिः पुनः ॥ ३० ॥

लक्ष्मण । लक्ष्मणं पुनर्भूयोऽगमत् लक्ष्मणं प्रति गता यथा गौर्वृषस्यन्ती मैथुनेच्छावती महोक्षमहावृषं वृषस्यन्तीत्युपमान विशेषणमेतत् तेन वृषं लब्धुमिच्छन्तीति क्यच् अश्वक्षीरेत्यादिना असुक् तश्चाश्ववृषयोर्मैथुनेच्छायामिति तद्वदागमनं महोक्षमि ति अचतुरादिसूत्रेण निपातितम् मन्मथस्यायुधानि शराः आयुध्यन्ते एभिरित्यायुधानि घजर्थे कविधानमिति कः तेषां सम्पातः संश्लेषः तस्मात् व्यथ्यमाना पीड्यमाना मतिर्मनो यस्याः ॥ ३० ॥

लक्ष्मणमित्यादि । सा राक्षसी लक्ष्मणं पुनरगमत् यथा गौर्म होक्षं महावृषभं गच्छति महांश्चासौ उक्षा चेति जातमहद्वृद्धा दुक्षणइति षः कीदृशी वृषस्यन्ती वृषोऽत्र शुक्रलवचनः मैथुनाय वृषं शुक्रलपुरुषं इच्छन्ती कामुकीत्यर्थः गोपक्षे वृषं वृषभं इच्छ न्ती क्योऽस्वगाघश्चेति क्यः धनोदकाशनेत्यादिना सन् क्यविधानं स्वेच्छायां सनागमस्तु याभार्थे तेन मैथुनविषयस्वेच्छावगम्यते केचित्तु प्रकृत्यर्थत्यागेन मैथुनेच्छामात्रे वृषस्य अश्वस्येति क्यव न्त रूपं अतएव विरथद्धयानश्वस्यन्तीति नैषधप्रयोगः तत्र हि ह यान् मैथुनायेच्छन्तीत्यवगम्यते प्रकृत्यर्थपुरस्कारे हयशब्दान

अथापनीरित्याहुः अन्ये तु वृषस्यास्यस्यादित्यव्युत्पन्नमेव धातुदयं मैथुनेच्छायां वर्त्तत इत्याहुः कुसुमायुधस्य कामस्य सन्तापेन संक्लेशेन व्यथ्यमाना मतिर्मनो यस्याः सन्ताप इति पाठे कामेन यः सन्ताप इति व्याख्येयं मन्मथायुधेति क्वचित् पाठः आयुध्यन्ते एभिरिति कृगृह्येतिकरणे कः कद्धोःकभावद्त्युक्तेः मन्यतेऽनयेतिकरणे क्तिः॥ ३०॥

तस्याः सासद्यमानाया लोलूयावान्रघूत्तमः। असिं कौक्षेयमुद्यम्य चकारापनसं मुखं॥ ३१॥

तस्याः। सासद्यमानायाः समीपे गर्हितं सीदन्त्याः प्रविशन्त्याः लुपसदेत्यादिना यङ् रघूत्तमो लक्ष्मणः मुखमपनसमपगतनासिकञ्चकार उपसर्गाच्चेत्यच् नासिका च नसादेशमापद्यते तच संज्ञायामिति नानुवर्त्तते किं कृत्वा कौक्षेयमसिमुद्यम्य उत्क्षिप्य कुक्षौभव इति दृतिकुक्षीत्यादिना ढञ् कौक्षेयः लोलूयावान् अत्यर्थं लवनक्रियायुक्तः लुनाति लोलूया यङन्ताद्प्रत्ययादित्यकारः सा विद्यते यस्येति मतुप्॥ ३१॥

तस्यादित्यादि। रघूत्तमो लक्ष्मणः कौक्षेयं कुक्षौ कोषे भवं विद्यमानं तीक्ष्णलोहभवं वा असिं खड्गं उद्यम्य उत्क्षिप्य राक्षस्याः सासद्यमानायाः समीपे गर्हितं सीदन्त्याउपविशन्त्याः मुखं अपनसं अपगतनासिकं चकार लोलूयावान् अतिशयच्छेदनयुक्तः तत् कर्तृत्वात् सूचसूत्रेत्यादिना लूञोयङ् दित्वं खर्युः संख्यादः मोङ् मन्नपादतुः गत्यर्थाद्गृलुपेति सदेर्गर्हार्थे यङ् ढचेकादिति कुक्षेर्भ

बाय च्छेय: कुक्षेलीदणसोदार्थादिकारे टेयन्निति केचित् कुक्षि: खड्गपिधाने स्थात् तीक्ष्णसोदे तथोदरे इतिकोष: अपत्यर्थं उक्त ममितिवत्॥ २१॥

अहं शूर्पणखा नाम्ना नूनं नाज्ञायिषि त्वया। द ण्डोऽयं चत्रियो येन मय्यपातीति साब्रवीत्॥ २२॥

अहम्। सा राचसीत्यब्रवीत् अहं शूर्पणखेति नाम्ना नूनम वश्यन्त्वया नाज्ञायिषि न ज्ञातास्मि ज्ञादत्यस्मात्कर्मणि लुङ् स्यसिजित्यादिना अजन्तत्वात् चिण्वदिट् आतोयुगिति युक् स्वाङ्गाच्चेति ङीषि प्राप्ते नखमुखात्संज्ञायामिति प्रतिषेध: पूर्व्व पदात्संज्ञायामिति णत्वम् अज्ञाने कारणमाह येनायन्दण्डो नासाच्छेदनलक्षणो मय्यपाति पातित: पाते: कर्म्मणि लुङ् चि णादेश: अत उपधाया इति वृद्धि: चिणोलुक् चेत्रिय: पर चेत्रे चिकित्स्य: परचेत्रे जन्मान्तरशरीरे यदि शक्यश्चिकित्सितुं तदा नासिकाया: सम्भवात् चेत्रिये च परक्षेत्रे चिकित्स्य इति निपातनम्॥ २२॥

अहमित्यादि। सा राचसी इत्यब्रवीत् किंतदित्याह नाम्ना शू र्पणखाहं नूनं निश्चितं त्वया नाज्ञायिषि न ज्ञाता कर्म्मणि टी श्चा सि: हनग्रहदृशश्च इति मिण् यनज्णिदिति यन् नाम्नेति भेदके तृ तीया शूर्पणखेति नाम्ना उपलचितेति केचित् शूर्पवत् नखा यस्या: सा शूर्पणखा पूर्व्वपदस्थात् पु:संज्ञायां णत्वमिति परे स्वमते पूर्णो दान्ते इत्यादौ वाशब्दस्य व्यवस्थावाचित्वात् नखमुखान्तात् सं ज्ञायामीपनिषेध इति परे स्वमते पातृशोनादीत्यादिना स्वाङ्गा दीप् प्रत्ययोविभाषित ईपोऽभावपक्षे आप् पक्षे तादृशसंज्ञाया

अभावात् न ईप् ईपि सति तु वा का चतिः तच वाशब्दोव्यवस्था शाची वा अशाने हेतुमाह येनायं दग्डोमाशाच्छेदनरूपो मधि त्वया अपाति निपातितः ण्यन्तात् पतेः कर्मणि टी चेचियः ज न्मान्तरशरीरे चिकित्स्यः एतज्जन्मनि नाशाया अनुत्पत्त्या शरी रान्तर एव तत्सम्भवात् विकारसंचेत्यादिना चिनशब्दात् जन्मा न्तरशरीरे चिकित्स्येऽर्थे इयः चेत्रादियः परचेत्रेचिकित्स्ये इति पर सूत्रं तच परचेत्रे जन्मान्तरशरीरे ॥ ३२ ॥

पर्य्यशापीद्दिविष्ठासौ संदर्श्य भयदं वपुः। अपिस्फ वञ्च बन्धूनां निनङ्क्षुर्विक्रमं मुहुः ॥ ३३ ॥

पर्य्य। असौ राचसी पर्य्यशापीत् आक्रुष्टवती शपेरनिटः सिचि हलन्तलचणा वृद्धिः शपउपालम्भन इति तङ् न भवति उपलम्भनं हि वाचा शरीरस्पर्शनम् दिविष्ठा नभसि वर्त्तमाना तत्पुरुषे क्वतिवहुलमिति सप्तम्या अलुक् अम्बाम्बेति षत्वम् भयदं रौद्रम्वपुः शरीरं सन्दर्श्य दर्शयित्वा बन्धूनां विक्रमं शौर्य्यं मुहुः पुनः पुनः अपिस्फवत् स्फोतीचकार अर्तिह्रीत्यादिना णावित्यनुवृत्तौ स्फायोव इति वकारः स्फायतेरुङि णिलोपः ह्रस्वादिर्व्यञ्जनादि अभ्यासस्य खयः शेषः चर्त्वमित्यस्य सन्वद्भावे नि नङ्क्षुः नष्टुमिच्छुरित्यर्थः नशेः सनि मस्जिनशोर्झलीति नुम् ॥ ३३ ॥

पर्य्यशापीदित्यादि। असौ राचसी दिविष्ठा सती नभस्था सती भयदं भयजनकं वपुः सन्दर्श्य पर्य्यशापीत् आक्रुष्टवती ब न्धूनां खरादीनां विक्रमं मुहुर्व्वारं वारं अपिस्फवच वर्द्धयामास

च रामादीनां भवार्थं विवर्द्धं कथयामासेत्यर्थः निनङ्क्षुः अन्तर्द्धातुमिच्छुः नशेः मनि मूणरधामुचामिति पुम् मस्जिनशोर्झलीति षङ् षढोःकःसे शपीत्वमात्रोमो श्यनिवि: अनिमसात् नलवर्देति त्रिः दिवि तिष्ठतीति इनजनादिति डः सप्तम्या अलुक् पलशाभि धानात् संपूर्व्वात् इशेर्ण्यन्तात् क्लीयप् अपिस्फवदिति स्फायीङ् वृद्धौ णिःप्रेरणे पातिस्फायोर्लमवङ्गौ इत्यामाविति वङ् णिश्रीत्यङ् द्वित्वं खेःसन्वत् न्यञ्जुङःखः अपिस्फुरदिति कचित् पाठः तच प्र काशितवतीत्यर्थः अपुस्फुरदिति कचित् पाठः तच प्रकाशितव तीत्यर्थः अपुष्फरद्दिति पाठेऽपि तथा स्फुरतिस्फूर्त्ती चङो की श्रीङोऽञेति पचे उकारस्यात्वं ॥ २३ ॥

खरदूषणयोर्भ्रात्रोः पर्य्यदेविष्ट सा पुरः। विजिग्रा हयिषू रामं दण्डकारण्यवासिनोः ॥ २४ ॥

खर। खरदूषणयोर्भ्रात्रोर्दण्डकारण्यवासिनोः पुरः अग्रतः पर्य्यदेविष्ट परिदेवनकृतवतीति देवृदेवनइत्यस्यात्मनेपदि नः सेटो लुङि रूपम् परिदेवने कारणमाह विजियाहयिषु रामं विग्राहयितुं योधयितुमिच्छुः ग्रहेर्ण्यन्तस्य सनन्तस्य रूपम् रीरीति रेफलोपः ढ्रलोपे इति दीर्घत्वम् किम्पर्य्यदेविष्टेत्याह ॥ २४ ॥

खरदूषणयोरित्यादि। रामं विजियाहयिषुः विग्राहयितुं अ रादिभिः सह योधयितुमिच्छुः सा राचसी खरदूषणयोर्भ्रात्रोः पुरोऽग्रतः पर्य्यदेविष्ट क्रन्दितवती देवृदेवने किम्भूतयोः

दण्डकारण्यवासिनोः दण्डकनामारण्ये वसत इति यथादिना णिण् वक्तुं श्रीलमनशोरित्यन्ये यद्दैर्घ्यन्तत्वात् वनउःपुर इति पूर्व्वाधरावरा इति पूर्व्वशब्दस्य पुरादेशः अतएव अस् तद्योगे यमार्थेनेत्यादिना षष्ठी ॥ ३४ ॥

कृते सौभागिनेयस्य भरतस्य विवासितौ। पित्रा दौर्भागिनेयौ यौ पश्यतं चेष्टितं तयोः॥ ३५ ॥

कृते। भरतस्य कृते कार्य्यनिमित्तं राज्ये अभिषेक्तव्यमिति सुभगा कैकयी तस्या अपत्यं सौभागिनेयः स्त्रीभ्यो ढक् कल्या ण्यादीनामिनङ् तत्र सुभगादुर्भगा चेति पद्यते हृद्भगेत्युभय पदवृद्धिः पित्रा यौ विवासितौ निष्काशितौ दौर्भागिनेयौ कौश ल्यासुमित्रा च दुर्भगे तयोरपत्ये रामलक्ष्मणौ तयोश्चेष्टितमा चाछेदनम्पश्यतम् विधौ प्रार्थनायां वा लोट् यसस्तम् ॥ ३५ ॥

कृतेइत्यादि। इति पर्य्यदेविष्ट इति पूर्व्वेणान्वयः सौभागिनेय स्य सुभगापुत्रस्य भरतस्य कृते निमित्तं यौ दौर्भागिनेयौ दुर्भ गापुत्रौ रामलक्ष्मणौ पित्रा दशरथेन विवासितौ राज्ञान्निराकृ तौ तयोश्चेष्टितं नासाच्छेदनरूपं युवां पश्यतं विधौ गी कृते इत्य व्ययं निमित्तार्थे वर्त्तते क्विवन्तकृत्शब्दात् चतुर्थीत्येके कृतश ब्दात् सप्तमीत्येके वाक्याद्यतोऽव्यावादेरित्यादिना आवन्तत्वात् सुभगादुर्भगाशब्दाभ्यां अपत्यार्थे ण्येयः निन्तेश्चिरिति द्विपदे वृद्धिः कल्याणीसुभगेत्यादिना ण्येयस्य इनेयादेशः यथोर्लोप इत्यालोपः ॥ ३५ ॥

मम रावणनाथाया भगिन्या युवयोः पुनः। अयं तापसकाद्ध्वंसः क्षमध्वं यदि वः क्षमं ॥ ३६ ॥

मम। रावणो नाथः प्रभुर्य्यस्याः मम विशेषणं युवयोर्भगिन्या अयन्तापसकात् कुतापसात्कुत्सायाङ्कन् ध्वंसो नासिकाविना शः यदि वः युष्माकङ्क्षमं युक्तम् क्षन्तुमित्यर्थात् युष्मदि गुरावेकेषामिति बहुवचनन्तयोर्य्येष्टत्वात् तर्हि क्षमध्वं उपेक्षध्वं रावण एव शास्यतीति भावः पुनरप्येजयितुमाह ॥ ३६ ॥

ममेत्यादि। रावणोनाथोयस्यास्तादृश्या मम युवयोर्भगिन्या युवयो रेव पुरोऽयतः यूयं तापसकात् क्षुद्रतपस्वि[illegible]सका शात् ध्वंसोनासाच्छेदनरूपोवृत्तः अत्र यदि वोयुष्माकं क्षमं क्षन्तुं योग्यं तदा यूयं क्षमध्वं रावण एव शास्यतीति भावः विकारसंघेत्यादिना स्वार्थे कुत्सार्थे वा कः युष्मदोर्हित्वे बहुत्वविवक्षा क्षममिति क्षमायोग्यं सामान्यतः प्रयुक्तं। युक्ते योग्ये हिते क्षम मिति कोषः क्षममव्ययमित्यन्ये पुनरिति पाठे मम पुनरिति योज्यं ॥ ३६ ॥

असंस्कृत्रिमसंव्यानावनुप्तिमफलाशिनौ। अभूत्रिमपरीवारौ पर्य्यभूतां तथापि मां ॥ ३७ ॥

असम्। संस्कारेण वापेन भरणेन च निर्वृत्तं संस्कृत्रिममुप्तिमभृत्रिमञ्च ड्वितः क्त्रिः क्त्रेर्म्मन्नित्यम् संपर्य्युपेभ्य इति सुट् सम्पूर्व्वस्य क्वचिदभूषणेऽपीष्यते संस्कृत्रिमन्न विद्यते येषामिति ञ् समासः असंस्कृत्रिमाणि संव्यानानि परिधानानि उत्तरी

याणि ययोः वल्कलवाससावित्यर्थः अनुप्तिमाणि फलानि अग्न मनमाहारो ययोः तौ वन्यफलाहारौ न शालिभोजनौ परिक्रियतेऽनेनेति घञ् उपसर्गस्य घञीति दीर्घः मृगाणाममनुष्यत्वात् अभृत्रिमः परीवारो अनुजीविलोकोययोस्तौ मृगपरिवारौ तथापि माम्पर्य्यभूताम्परिभूतवन्तौ लुङि रूपम्॥ ३७॥

असंस्कृत्रिमसंव्यानावित्यादि। तौ असंस्कृत्रिमसंव्यानौ तन्त्वादीनां संस्कारेण जातं संस्कृत्रिमं संपरेःसुमितिसुम् न विद्यते संस्कृत्रिमं संव्यानमुत्तरीयं ययोर्वल्कलमात्रसत्वात् वपनेन जातं उप्त्रिममनुप्त्रिमं वन्यं तादृशं फलमशनमाहारो ययोः अथवा नब्राह्मित्वात् कर्त्तरि अनः फलाशिनाविति क्वचित् पाठः भरणेन पोषणेन जातोभृत्रिमः परीवारोऽनुजीविजनो ययोः सर्व्वत्र ड्वितस्क्त्रिमक् यजस्वपाद्योरिति त्रिः परिवृणोतीति कर्त्तरि घञ् व्यतीहारे त्रिःपूर्व्व इत्यत्र व्यतीहार इति दीर्घनिर्द्देशात् क्वचित् घञन्ते उपसर्गस्य दीर्घत्वं सूचितं तेनात्र परेरिकारस्य दीर्घत्वं तौ यद्यपि ईदृशौ तथापि मां पर्य्यभूतां परिभूतवन्तौ भूस्तेति सेलुक्॥ ३७॥

स्वःश्रेयसमवाप्तासि भ्रातृभ्यां प्रत्यभाणि सा। प्राणिवस्तव मानार्थं प्रजास्वसिद्धि मा रुदः॥ ३८॥

स्वःश्रे। स्वःशब्दः प्रशंसामाह शोभनं श्रेयइति वाक्ये श्वसो वसीयः श्रेयसइत्यच् मयूरव्यंसकादित्वात्सः स्वःश्रेयसङ्कल्याणमवाप्तासि प्राप्स्यसि भविष्यदनद्यतने लुट् मारयावस्ताविति भवति ताभ्यां भ्रातृभ्याम्प्रत्यभाणि प्रतिभणिता सा कर्म्मणि लुङ् प्राणि

वसाव मानार्थम् तव मानखण्डनमाभूदिति जीवावः अन्प्राणने अनष् रुदादिभ्यः सार्व्वधातुक इति इट् अनितेरिति णत्वं त्व माद्रज यथास्थानं गच्छ आस्वसिहि उद्वेगन्त्यज विधौ प्रार्थनायां वा लोट् मा रुदः माङ्लुङ् इरितो वेत्यङ् यदा नास्ति तदा मारोदीरिति ॥ ३८ ॥

स्वःश्रेयसमित्यादि। भ्रातृभ्यां खरदूषणाभ्यां सा राक्षसी प्रत्युत्तरं प्रापिता किञ्चिदित्याह स्वःश्रेयसं कल्याणं अवाप्नासि प्राप्स्यसि प्रचुरधनेत्यर्थात् आरूपं शोभनं श्रेयः स्वःश्रेयसं श्रोऽवसीयस्श्वःश्रेयसेति निपातितं तव मानार्थं सम्मानार्थं आवां प्राणिवः जीवावः अनञ्प्राणने रुभ्योयइतीम् प्राग्वल्लोप इति पचे णत्वं त्व माद्रज गच्छ स्वस्थानमित्यर्थात् आस्वसिहि आश्वासं लभस्व उद्वेगं त्यज इत्यर्थः प्रार्थनायां णौ रुदादित्वात् पूर्व्ववदिम् त्वं मा रुदः मा रोदीः लघिरवदरोदे इरित्वात् मास्मलिप्सुदिति पचे ङः ॥ ३८ ॥

जच्चिमोऽनपराधेऽपि नरान्नक्तन्दिवं वयं। कुतस्त्वं भीरु यत्तेभ्यो द्रुह्यद्भ्योऽपि चमामहे ॥ ३९ ॥

जच्चि। वयं अनपराधेऽपि नक्तञ्च दिवा च नक्तन्दिवम् अचतुरेति निपातितम् नरान् जच्चिमोभक्षयामः जचभचहसनयोरिति भचार्थस्य रुदादिभ्य इतीट् अस्मदोर्द्वयोश्चेति दिवे वयमिति बहुवचनं यतएवं हे भीरु सम्बुद्धौ गुणोन भवति संज्ञापूर्व्वकोविधिरनित्य इति कुतस्त्वकुतएतदागतम् अव्ययत्वात् त्यप् अमेहक्कतसित्रेभ्य इति त्यप् तेभ्यो नरेभ्यो द्रुह्यद्भ्योऽपि द्रोह

कुर्व्वाणेभ्योऽपि चमामहे नैवेत्यर्थः क्रुधद्रुहेति सम्प्रदानत्वम् चमेर्गम्यमानोनऽर्थस्तस्याक्षयार्थत्वात् चमध्वं यदि वः चममि त्यस्य प्रतिवचनम्॥ ३८॥

अचिमद्दत्यादि। अनपराधे अपराधाभावेऽपि वयं नरान् नक्तं दिवं रात्रौ च दिवा च अचिमः भचयामः अचद्ललुघभचस्रा मयोर्घिलात् द्द्दादिः असुदोदिलवङ्कलविवचा अन्यराचसयो गाद्दङ्कलं नक्तन्दिवमिति अचिभ्रुवादिलान्निपातितं स्वार्थिकच्या न्तेन दिवाशब्देन समाहारोद्दन्दोवा हे भीरु द्रुह्यद्भ्योऽपि द्रोहं कुर्व्वद्भ्योऽपि तेभ्यो नरेभ्योवयं चमामहद्दति यत्तत् कुतस्त्वं कुत आगतं तत्राश्चिरैत्यादिना त्यः यदभिप्रेत्य धात्वर्थस्तत्र चतु र्थीति परः चमते तादर्थ्यविवचयैव भीरु द्दति तन्वादेर्व्वेति पचे जप् सुभुदीति ह्रस्वः ह्रस्वकरणान्न गुणः॥ ३९॥

तौ चतुर्द्दशसाहस्रवलौ निर्ययतुस्ततः। पारश्वधि कधानुष्कशाक्तीकप्रासिकान्वितौ॥४०॥

तौच। ततोनिगद्दनादुत्तरकालन्निर्य्ययतुः निर्गतवन्तौ च तुर्द्दशसहस्राणि परिमाणमस्य वलस्य प्रतिवचनमित्यस्मिन्वि षये शतमानविंशतिकसहस्रवसनादण् शाश्वतेः सङ्ख्यायाः संव त्सरेत्युत्तरपदवृद्धिः चतुर्द्दशसाहस्रम्बलं ययोः तौ यथा पार श्वधिकधानुष्कयाष्टीकप्रासिकान्वितौ परश्वधः प्रहरणमेषा मिति परश्वधात् ठञ्चेति ठञ् तथा धनुः प्रहरणमेषां यष्टिः प्रहरणमेषामिति शक्तियष्ट्योरीकक् प्रासः कुन्तः प्रहरणमि